BIBLIOTHECA INDICA

COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE
ASIATIC SOCIETY OF BENGAL

NEW SERIES No 1239

# सभाष्यवृत्ति-निरुक्तम् ।

# THE NIRUKTA

## WITH COMMENTARIES.

EDITED BY

LATE ACHARYA SATYAVRATA SAMASRAMI




Thoroughly revised by his son and pupil

PROF HITAVRATA SAMAKANTHA

*Assistant Lecturer Vedas The University of Calcutta*

(SECOND EDITION)

VOL I FASC I

CALCUTTA

PRINTED BY S V CHATTERJI SATYA PRESS 16/1 G HOSE LANE.

AND PUBLISHED BY THE

ASIATIC SOCIETY, 1, PARK STREET,

1911

# ॥ निरुक्तम् (निघण्टुः) ॥

## टीका-भूमिका ॥



महत्त्वयन्तकान्तारसञ्चारिकरिणं मुखे * ।
मदालदैत्यमातङ्गभङ्गे केसरिणं † भजे ‡ ॥ १ ॥

नमस्त्रिधाम्ने शिपिविष्टनाम्ने §
निरुक्तविद्यानिगमप्रतिष्ठाम् ।
अवाप यास्को विविधेषु यागे-
ष्वनेन ‖ चाम्नायमभिष्टुवानः ॥ २ ॥

प्रणमामि यास्कभास्करं योऽहृत्तमसः प्रकाशितपदार्थः ।
यस्य भुवनत्रयीमिव गावः ¶ प्रकटां त्रयीं वितन्वन्ति ॥ ३ ॥

---

* यस्य मुखं दृष्ट्वा भयं करोति बुध्यते तमित्यर्थः । कटौ चासौ कोऽपि इत्युच्यते तस्य विशेषणं कान्तारसञ्चारीति। कान्तारस्य च विशेषणं महत्त्वयन्त इति। अत्र त्रयी, पक्षे वेदत्रयपरम् , पक्षे त्रिलोकीपरम् ।

† मदालदैत्यरूपमातङ्गानां भङ्गं पराजयं दलनं वा दृष्ट्वा यः केसरीत्युपलभ्यते तम् ।

‡ यस्य देवस्य मुखदर्शनात् भयं करोति विक्रमदर्शनाशाय केसरीति बुध्यते, न करिलकेसरिलोभयघमाक्रान्त महाबल गजानन देवं भजे इत्यर्थः ।

§ शिपिविष्टोऽत्र सविता, स च जगत्प्रसविता , ब्रह्म आदित्यो वा विधाता परम् । ( निरु॰ ५, ७-८९ । ऋ॰ मं॰ ७ ९९, ७—१००, ५ ,—६ )।

‖ 'अनेन' सविता प्रेरित एव 'यास्क' [तथा च श्रूयते 'धियो यो नः प्रचोदयात्' ऋ॰ सं॰ ३ ६२, १०], 'विविधेषु यागेषु' विविधयागसिद्धाय [निमित्तात् कर्मयोगे ( २, ३, ३६ वा॰ )—इति सप्तमी ] 'आम्नायमभिष्टुवान' सन् 'निरुक्तविद्यानिगमप्रतिष्ठाम्' 'अवाप' अलभतेति नमः इत्यर्थः ।

¶ किरणाः ।

वागीश्वरं वचोभिर्वसिष्ठमुख्यान्मुनींस्तपोभिश्च ।
अनुक्तवन्तं वन्दे पितामहं देवराजयज्वानम् ॥ ४ ॥
आचार्यं शाब्दिकानामृचि यजुषि च यद्दृष्टतुल्यप्रभावम्,
वन्दे नैरुक्तवृत्तिक्रममुपनिषद्ब्रह्मरीणामुपघ्नम् ।
आभक्तारं क्रतूनामवनिसुखकरप्रक्रियानुक्रियायै,
तातं यज्ञेश्वरार्यं प्रतिहततमसं ज्ञानभास्वन्मयूखैः ॥ ५ ॥
यज्वा 'रङ्गेश'पुरी-'पर्यन्त' ग्रामवास्तव्यः * ।
विरचयति देवराजो नैघण्टुककाण्डनिर्वचनम् † ॥ ६ ॥

भगवता यास्केन समाम्नायं नैघण्टुक-नैगम-दैवताकाण्ड-रूपेण त्रिविधं गवादि-देवपत्न्यन्तं निर्ब्रुवता नैगम-दैवताकाण्ड-पठितानि पदानि प्रत्येकमुपादाय निरुक्तानि दर्शित-निगमानि च, नैघण्टुककाण्डपरिपठितानान्तु गवाद्यपारे अन्तानामेकचत्वारिंशच्छतत्रयाधिकसहस्रं ‡ सामान्येन 'एतावन्त्यस्य सत्वस्य नामधेयानि'—इति व्याख्याय तत्र प्रदर्श्य कतिचिदेव निरुक्तानि, तथा कानिचिदेव दर्शितनिगमानि ; अन्यानि तु ग्रन्थविस्तर-

---

* वासकारी। 'वसेस्तव्यत् कर्त्तरि णिच्च'—इति पा० ३. १. ९६ वा०।

† यदि च काण्डत्रयात्मकस्य समस्तस्य 'निघण्टु'—इति प्रसिद्धस्य निरुक्तग्रन्थस्य व्याख्यानं कर्त्तव्यमस्ति, तथापि विशेषतो नैघण्टुककाण्डनिर्वचनार्थएवैषारम्भ इति सूचयितुमुक्तं नैघण्टुकेत्यादि।

‡ तथाहि—प्रथमाध्यायीय-सप्तदशखण्डेषु 'गौ'—इत्यादि 'प्रज्ञाणि'—इत्यन्तम् पञ्चदशोत्तर चतुःशतम् ( ४१५ ), ततः द्वितीयाध्यायीय-द्वाविंशति-खण्डेषु 'अपः'—इत्यादि 'हनः'—इत्यन्तं षोडशाधिकपञ्चशतम् (५१६), ततश्च तृतीयाध्यायीय त्रिंशत् खण्डेषु 'उरु'—इत्यादि 'अपारे'—इत्यन्तम् दशोत्तरचतुःशतम् ( ४१० ), एवं सङ्कलनया अवगतम् (१३४१)।

भीत्या सामान्येन निर्वचनलक्षणस्योक्तत्वात् बुद्धिमद्भिर्निर्वक्तुं सुशक्यानीत्यभिप्रायेण चोपेक्षितानि। स्कन्दस्वामी च ततएव निरुक्तमनुजगाम।

तत्र तु 'दिवसादित्यस्य च साधारणनामानि स्वरादीनि षट्' —'इदमादीनि, च उपमाभेदात् भेदनामानि द्वादश'—'प्रपित्वे अभीके इत्यादीनि च षड्‌विंशतिश्च' भाष्यकारेण बहुवक्तव्यत्वात् * प्रकरणश एव निरुक्तानि †, स्कन्दस्वामिना च व्याख्यातानि ‡। अतोऽन्येषां § यथाक्रमेणानिरुक्तेर्निगमाप्रदर्शनाच्च स्वरूपमात्रमप्यध्ययनादेवावगन्तव्यम् ‖। तच्चाध्ययनं कलियुगे प्रायेण विच्छिन्नसम्प्रदायमासीत्। ततश्च कोशएव ¶ शरणमासीत्। तेषु च केषुचिदर्थेषु लेखकप्रमादादिभिः कानिचित्पदान्यधिकान्यासन्, अन्येषु च कानिचिन्न्यूनानि, अपरेषु च कानिचिदपहाय कानिचित् विपर्यस्तानि अक्षराणि च विपर्यस्तानि। एवं व्याकीर्णेषु कोशेषु नियमैकभूतस्य प्रतिपदनिर्वचन-निगमप्रदर्शनपरस्य कस्यचिद्‌ व्याख्यानस्याभावात् नैघण्टुकं काण्डमुत्सन्नप्रायमासीत्।

---

* सन्ति च बहूनि वक्तव्यानीति धियेति यावत्।

† प्रकरणानुगतं यथाक्रमं प्रतिपदमुक्तार्थेन। अत्र च भाष्यकारेणेत्यस्य निघण्टुभाष्यकारेण यास्केनेत्यर्थो बोध्यः।

‡ अतोऽन्येषां स्वरूपादिनिर्णयाय न मे श्रम कश्चनेत्याशयः।

§ 'अत' एभ्य उल्लिखितनिरुक्तादिव्याख्यातपदेभ्य, 'अन्येषां' सर्वेषामेव पदानाम्।

‖ अध्ययनञ्चात्र पुस्तकाक्षरज्ञानविहीनवैदिकानां सम्प्रदायसिद्धं गुरुपरम्परागतं बोध्यम्।

¶ कोशपुस्तकमेवेत्यर्थः।

ततश्च पाठसंशोधनार्थं बालानां सुगमत्वाय च तद्गतानां पदानां क्रमेण प्रतिपदनिर्वचननिगमौ प्रदर्शयितुं *,—स्वरादीनीति पूर्वमुक्तस्य प्रकरणत्रयस्य, नैगम दैवतकाण्डगतानाञ्च पदानां भाष्यकारेण निरुक्तानां स्कन्दस्वामिना च तद्व्याख्यातानां, प्रक्रिययोन्मीलयितव्यम् †; बहुशस्तु नैघण्टुककाण्डनिर्वचनानन्तरं तदुन्मीलयितुमयमध्यवस्यिमः।

इदञ्च स्वमनीषिकया न क्रियते किन्तु नैघण्टुकगतेष्वेव पदेष्वर्धशतत्रयमात्राणि पदानि भाष्यकारेणैव तत्र तत्र निगमेषु प्रसङ्गान्निरुक्तानि, स्कन्दस्वामिना च निगमव्याख्यानेषु अन्यानि च पदानि शतद्वयमात्राण्युपात्तानि। तेन च समाम्नायपठितानां पदानामन्येभ्यो व्यावृत्त्यर्थं किञ्चिच्चिह्नं कृतम्, अतस्तेषां पाठशुद्धिस्तत्रैव शुद्धा। अन्येषाञ्च पदानामस्मत्कुले समाम्नायाध्ययनस्याविच्छेदात्,—श्रीवेङ्कटाचार्यतनयस्य माधवस्य भाष्यकृतौ नामानुक्रमण्याः आख्यातानुक्रमण्याः-स्वरानुक्रमण्याः -निपातानुक्रमण्याः-निर्वचनानुक्रमण्याः-तदीयस्य भाष्यस्य च बहुशः पर्यालोचनात्,-बहुदेशसमानीतात् बहुकोशनिरीक्षणाच्च पाठः संशोधितः। निर्वचनञ्च-निरुक्तं,(१) स्कन्दस्वामिकृतां

---

* प्रदर्शयितुम्—इत्यस्य अध्यवस्यिमः—इत्यनेन सम्बन्धः। एतेनैव नैघण्टुककाण्डीय-प्रकरणत्रयस्य...। एतावतैव ग्रन्थः कथं न समापितः? प्रकृत चर्चितचर्वणे नैगमादिव्याख्याने कथं प्रयास इत्याशङ्क्याह—स्वरादीनीत्यादि तदुन्मीलयितुं निश्चयम्।

† अत्र पदे,-इव प्रकृतिः, अत्र प्रत्ययः, इमानि च सूत्रादीनि साधकानि —इत्येवं प्रदर्शनमित्यर्थः।

निरुक्तटीकां,(२) स्कन्दस्वामि(क)-भवस्वामि(ख)-राहदेव(ग)-श्रीनिवास(घ)-माधवदेव(ङ)* -उवटभट्ट-(च)-भास्करमिश्र(छ)-भरतस्वाम्यादि(३)-विरचितानि वेदभाष्याणि (१) पाणिनीयं व्याकरणं,(४) विशेषत उणादि(क) तद्वृत्ति,(ख) क्षीरस्वाम्यनन्ताचार्यादिकृता निघण्टुव्याख्या,(५) भोजराजीय व्याकरणं,(६) कमलनयनीय-निखिलपदसंस्कारञ्च(७) निरीक्ष्य क्रियते। तत्र च अस्मद्व्याख्येयानां तत्र दृष्टानां पदानां तत्तत्कृतञ्च निर्वचनमुपादाय तदेवास्मत्प्रकरणानुरूपञ्चदुल्लिख्यते, अननुरूपन्तु किञ्चिद् विपरिणमय्य, अन्येषाञ्च कतिपयानां निरुक्तकारोक्तनिर्वचनसामान्यलक्षणमनुसृत्य, निरुक्तिः क्रियते।

निगमश्च † दक्षिणापथनिवासिभिरधीतेषु वेदेषु परिदृश्यमानस्तत्तद्भाष्याणि निरीक्ष्य तत्र तत्र प्रदर्श्यते, अदृष्टनिगमानाञ्च पदानां निगमा अन्वेष्याः ‡।

—अतोऽस्माभिर्यथामति प्रदर्शितौ प्रतिपदनिर्वचननिगमौ विद्वांसो बुद्ध्या निरूप्य शुकभाषितमस्मनसि कुर्वन्तु §॥

---

* सायणमाधवात् प्राचीनोऽयं माधवः, 'रजोऽपि जम्भि, सत्वमसे—इत्यादिमङ्गलाचरणपूर्वविवरणग्रन्थकारः' ।

† निगमः—उदाहरणरूपा वैदिकमन्त्रादि ।

‡ एतेन तेषामपि स्थितिमत्त्वावगमा लक्षिता ।

§ यथा, यथा कीरा यानि कान्यपि वचनानि भाषयन्ति, तानि सर्वाण्येव यथा श्रुतानि, न तु स्वबुद्ध्यादिप्रयुक्तानि तथैवास्माभिरुक्तमत्र सर्वाएव ग्रन्थान्तरादि लब्धा, न स्वकपोलकल्पिता—अतोऽत्र विश्वासं स्थापयन्तु विपश्चितः इति भावः ।

# अथ प्रथमाध्यायः ।

'अयातोऽनुक्रमिष्यामः'—इत्यादि (२,५) निरुक्ते तस्य टीकायाञ्च यन्नैघण्टुककाण्डविषयमुक्तं तत् सर्वं तत्रैव द्रष्टव्यम् ॥

आदितएकविंशतिः पृथिवीनामधेयानि—

ॐ गौः(१) । ग्मा(२) । ज्मा(३) । क्ष्मा(४) । क्षा(५) । क्षमा(६) । क्षोणिः(७) । क्षितिः(८) । अवनिः(९) । उर्वी(१०) । पृथ्वी(११) । मही(१२) । रिपः(१३) । अदितिः(१४) । इळा(१५) । निर्ऋतिः(१६) । भूः(१७) । भूमिः(१८) । पूषा(१९) । गातुः(२०) । गोत्रे(२१) इत्येकविंशतिः पृथिवीनामधेयानि * ॥ १ ॥

---

(६) "क्षम." ख। "क्षामा"—इति C. D. E. ग ; अस्य च निगमाः —ऋ० सं० ६, १५, १. ८, ८५, ११ १०, १२, १। "क्षामः"—इत्यपि पाठो भवितुमर्हति, तथापि निगमदर्शनात् ऋ० सं० २, ३८, ७ ६, ५, ९. ८, ७०, ५ १०, १०६, १०। "क्षाम"—इत्यपि ऋक्संहितायां दृश्यते (४, २, १६ ;— १८, ४. ६, ३१, ११. १०, ४५, ३ —१०६, १।

(७) "क्षोणी"—इति कतिपयेषु सर्वत्र, अप्राधान्यतया टीकाकारस्तथ।

(१३) "रिपः"—इति च दृश्यते ऋक्संहितायाम्—२, ३४, ९. ७, ३२, १२ ;—६०, ८ ;—१०४, १८।

(१८) "भूमिः" ख, अशुद्धमेतदिति बुध्यते।

(२१) "गाथा" क, मुद्राकरप्रमादएवाय मिदमिति गम्यते।

* "इति पृथिव्याः' ग।

(१) गौः *। 'गम्लृगतौ (भू॰ प॰)' अस्मात् 'गमेर्डोस् (उ॰ २, ६२)'—इति कर्त्तरि कारके अधिकरणे वा डोः प्रत्ययः। गातेर्वा स्तुत्यर्थात् (अदा॰ प॰) बाहुलकोक्तेः (३, ३, ११३) कर्म्मण्यधिकरणे वा। 'गोतोणित् (७, १, ९०)'—इति च णिद्वद्भावात् वृद्धिः। अत्र भाष्यम्—'गौरिति पृथिव्या नामधेयं यद्दूरं गता भवति यच्चास्यां भूतानि गच्छन्ति गातेर्वौकारो नामकरणः (निरु॰ २, ५)'—इति। अस्य स्कन्दस्वामी—'दूरं गता भवति नैरन्तर्येणात्माकाशादिवत् दूरेऽप्युपलब्धेर्गतिक्रियाव्यवहारः')। अन्यचान्यत्र चोपलब्धेर्दूरोपदेशः। प्रत्ययोपात्तकृदर्थसम्बन्धाच्च गमिरत्र नैरन्तर्योपलब्धिदूरविशिष्टं गमनमुपादत्ते, 'तक्षा' 'परिव्राजकः' इति यथा †। यच्चास्यां भूतानि प्राणिनो गच्छन्ति। चो वार्थे। गातेर्वा स्तुत्यर्थस्य। (अदा॰ प॰) गीयते स्तूयतेऽसाविति, गायन्ति वास्यां स्थिता इति गौः। उदाहरणम्—'गोपदसि ( ? )'—इति। गार्हपत्योपस्थाने विनियोगात, गार्हपत्यस्य च गवि पृथिव्यां सदनात् गो-शब्दस्य पृथिव्यभिधानत्वनिश्चितमिति। एवमन्येष्वप्युदाहरणेषु तत्र, तत्र मन्त्रवाक्यार्थसमवायेन अभिधेयं प्रदर्शनीयं निश्चित्य तत्तदर्थाभिधायित्वम्। "व्रजं गच्छ गोष्ठानम् (य॰ वा॰ सं॰ १, २५–

---

* प॰—४.५ ११ २, १९ ४, १ ५, ५। निरु॰ २, ५ १४. ४, २१. ६, २ १२, ७।

† अयमभिप्राय—यथा तक्षणं कुर्वन्नेकएव पर तक्षेत्युक्ते योगदृष्टा वर्द्धकिजातिरूप्य काश्चिदिव प्रतीयते, एवं परिव्रजति बहवएव पर परिव्राजक इत्युक्ते योगदृष्टा भिक्षुरेव गृह्यते, एवमत्रापि।

२६)"—"गौर्जगार यद्ध पृच्छान् (ऋ० सं० १०, ३१, १०)"*—"अभवत् पूर्व्या भूमना गौः (ऋ० सं० १०, ३१, ६)"†—इति निगमाः ॥

(२) ग्मा गमेः पूर्वस्मिन्नेव कारकद्वये 'कनिन्युवृषितक्षि (उ० १, १५४)'—इत्यादिना विहितः कनिन् प्रत्ययो बाहुलकात् भवति। 'गम-हन-जन-खन-घसां लोपः क्ङित्यनङि (६,४, ९८)'—इत्युपधालोपः, औणादिकेन 'मनिन् (उ० ४, १४०)'—इति सूत्रेण वा मनिनि बाहुलकात् (३, ३, १) टिलोपः, 'डाबुभाभ्यामन्यतरस्याम् (४, १, १३)। अर्थः पूर्ववदेव। 'ग्मा गच्छतिः, गच्छन्तीहीयम्'—इति माधवः। "दिवश्च ग्मश्चापाश्च जन्तवः (ऋ० सं० १०, ४९, २)" ‡—"दिवश्च ग्मश्च मर्त्यम् (ऋ० सं० १०, १२, ६)" §—इति च निगमौ ‖। ग्म इत्यत्र छान्दसत्वाद्रूपसिद्धिः ॥

(३) ज्मा ¶। जमतिर्गतिकर्मा (निघ० २, १०) 'जमु अदने (मू० प०)'-जनी प्रादुर्भावे '(दि० आ०)'-'अञ्जू व्यक्ति-म्रक्षण-

---

* 'गौः पृथिवी • • तां अभीं • • जगार उद्गिरति'—इति सा० भा०।

† 'गौ दिवान् प्रति गन्त्री'—इत्यादि सा० भा०।

‡ 'दिवो द्युलोकस्य ग्मः पृथिव्याश्चोऽन्तरिक्षस्यैतेषु'—इत्यादि सा० भा०।

§ 'दिवश्च द्युलोकाच्च, ग्मश्च भूलोकाच्च, मर्त्यं मनुष्यम्'—इति सा० भा०।

‖ सम्भ्रमेऽपि निगमाः ; यथाहि—ऋ० सं० १, ११, १०, १०, ९-५, १८, २। एवं पूर्वत्र परत्र च सर्वत्र बोध्यम्।

¶ निघ० १२, ११।

कान्ति-गतिषु ( रु० प० )', क्षरणं सेचनमिति तद्वृत्तिः। एतेभ्यः 'श्वन्नुक्षन् पूषन् प्लीहन् ( उ० १, १५५ )'—इत्यादिना परिज्मन्निति कनिन्नन्तं सोपसर्गं निपातितम्, बाहुलकात् (३, ३, १ ) निरुपसर्गमपि भवति। निपातनादेव कारक-विशेषसिद्धिः। 'डाबुभाभ्यामन्यतरस्याम् (४, १, १३)'। गतौ पूर्ववदर्थः। अदन्ति वास्यां भूतानि, जातानि वा स्वकारणात्, जायन्ते वास्या ओषधयः। तथाचोपनिषत्–'अद्भ्यः पृथिवी, पृथिव्या ओषधयः ( तै० उ० २, १ )'—इति। अथवा व्यक्ता सर्वेषां प्रत्यक्षा न ह्याकाशादिवदव्यक्ता पृथिवी; 'तिस्रो मही-रुपरास्तस्थुरत्या गुहा द्वे निहिते दर्श्येका (ऋ० सं० ३,५६,२)' —इति च श्रुतिः। अक्ता सिक्ता भवति हविषा; 'तस्मादसाविमां हव्याभ्यनक्त्यभिजिघ्रति ( ऐ० ब्रा० १, २, १ )'—इति ब्राह्मणम्। "ये के च ज्मा महिनो अहिमायाः (ऋ० सं० ६, ५२, १५)"*—"अभिक्रत्वेन्द्र भूरध ज्मन् (ऋ० सं० ७, २१, ६)"†—"उभया अत्र वर्सवोरन्त देवाः ( ऋ० सं० ७, ३९, ३ )" ‡—"अधज्मो अधवा दिवः ( ऋ० सं० ८, १, १८ )" §—इति च निगमाः॥

---

* ज्मा पृथिवीनामैतत्, पृथिव्यां भविरे—इति सा० भा०।

† 'हे इन्द्र! त्व क्रत्वा कर्मणा ज्मन् पृथिव्यां वर्त्तमानान् जन्तून् वाभिभू अभ्यभू'—इति सा० भा०।

‡ 'वसवो वसुमुक्षका देवा अत्र अस्मिन् यज्ञे उभया पृथिव्या रन्त रमयन्ताम्'—इति सा० भा०।

§ 'जमन्ति गच्छन्त्यस्यामिति ज्मा पृथिवी, तस्या सकाशादध'—इति सा० भा०।

(४) क्ष्मा *। 'चि चये' भ्वादिः (प०), 'क्षि निवासगत्योः' तुदादिः (प०), 'क्षि हिंसायाम्' क्र्यादिः (प०), क्षै, जै, सै, क्षये '( भ्वा० प० )', 'क्षमूष् सहने ( दि० प० )', 'क्ष्मायी विधूनने ( भ्वा०आ० )';—एतेभ्यः औणादिके मनिनि ( उ० ४, १४० ) बाहुलकाद्रूपसिद्धिः। डापि गतावर्थउक्तः। क्षियन्ति निवसन्त्यस्यां प्राणिनः, चायन्ति अवयवं गच्छन्त्यस्यां पदार्था इति वा, हिंसन्तिऽस्यां पापक्षतइति वा, क्षमते वा प्राणिजातरूपं, भारं विधुनयति वा प्राणिनः स्वकीयकाले। "पिता यत्स्वां दुहितरमधिष्कन् क्ष्मया रेतः ( ऋ० सं० १०, ६१, ७ ) †—"क्ष्मया चरति परि सा द्वेष्टु नः ( ऋ० सं० ७, ४६, ३ )" ‡—इति च निगमौ॥

(५) चा §। निरूपिताएव धातवः ‖। 'अन्येष्वपि दृश्यते ( ३, २, १०१ )'—इति सोपपदात् जनेर्विधीयमानो डः प्रत्ययः, 'अपिशब्दः सर्वोपाधि-व्यभिचारार्थः' ¶—इत्युक्तेर्निरुप-

* निरु० १०, ७।

† 'पिता प्रजापतिः यदा स्वां दुहितरं दिवमुषसं वाधिष्कन् अभ्यस्कन्दत् तदा सोममिव क्ष्मया पृथिव्या सह'—इत्यादि सा० भा०। एतन्मूलकमेव प्रजापतेर्दुहितृकामित्वं पुराणादौ प्रसिद्धम्।

‡ 'क्ष्मया क्षित्या क्षितौ वा चरति वर्तते मा द्विषन्, मोऽस्मान् परितश्च परिक्षन्तु'—इति सा० भा०। एवं सर्वत्र भाष्यं द्रष्टव्यं निगमस्य स्पष्टार्थम्।

§ निरु० २, ६।

‖ इतः पूर्वं क्षेत्रवेद।

¶ एवंविधं पाणिनिसूत्रभाष्यकारस्य भगवत्पतञ्जलेरिति बोध्यम्।

पदेभ्योऽपि भवति। क्ष्मायस्तु छान्दसत्वान्मकारलोपः। अर्थः पूर्वोक्तएव। "जातस्य च जायमानस्य च क्षाम् (ऋ० सं० १, ९६, ७)"—इति निगमः॥

(६) क्षमा। निरूपिताएव धातुभावाः। औणादिके मनिनि (उ० ४, १४०) बाहुलकाद्रूपसिद्धिः। अर्थः पूर्वोक्तएव। 'क्षमूष् सहने (दि० प०)'—इत्यस्माद् वा पूर्ववत् डाप् प्रत्ययः। "यः पार्थिवस्य क्षम्यस्य राजा (ऋ० सं० २, १४, ११)"—इति निगमः॥

(७) क्षोणिः *। 'टुक्षु रुक्षु शब्दे' अदादिः (प०) 'वीज्याज्वरिभ्योनिः (उ० ४, ४८)'—इति विहितो नि-प्रत्ययो बाहुलकाद् भवति, गुणः णत्वम्। क्षूयते शब्द्यते स्तूयते स्तोतृभिः, क्षुवन्त्यस्यां भूतानीति वा। क्षोणीति ईकारान्तं केचित् पठन्ति। तदा 'कृदिकारादक्तिनो वा ङीष् वक्तव्यः (४, १, ४५ वा०)' —इति ङीष्। "नवन्त क्षोणयो यथा † (ऋ० सं० १०, २२, ९)"—"य क्षोणीरनुचक्रदे (ऋ० सं० ८, ३, १०)"—इति निगमौ॥

(८) क्षितिः ‡। 'क्षि निवासगत्योः (तु० प०)', 'क्षि क्षये (भू० प०)' 'क्षि हिंसायां (स्वा० क्र्या० प०)'—एतेभ्योऽपि

---

* प० १, १० ।

† 'नवन्त विविधं व्याप्नुवन्ति। क्षोणय मनुष्यनामैतत्। मनुष्याः स्वकीय स्वामिन सेवार्थं यथा व्याप्नुवन्ति तद्वत्'—इति सा० भाष्य चिन्त्यम्।

‡ प० २ १। निरु० ४, २४।

'वर्सेस्ति (उ॰ ४, १७५)'—इति विहितस्ति-प्रत्ययो बाहुलकाद्(३, ३, १) भवति, गुणाभावश्च। अथवा 'स्त्रियां क्तिन् (३, ३, ८४)' कर्मण्यधिकरणे (३, ३, ८३) वा भवति। अर्थस्तु क्षेत्य-वोक्तः। "चेति चितोः सुभगो नाम पुष्यन् (ऋ॰ सं॰ ५, ३७, ४)"—"वोहि स्वस्ति सुक्षितिं दिवः (ऋ॰ सं॰ ६,२,११)"—इति निगमौ॥

(९) अवनिः*। 'अव रक्षण-गति-कान्ति-प्रीति-तृप्त्यवगम-प्रवेश-श्रवण-स्वाम्यर्थ-याचन-क्रियेच्छा-दीप्त्य-वाप्त्या-ऽऽलिङ्गन-हिंसा-दानभाग-वृद्धिषु (भ्वा॰ प॰) अस्मात् 'अर्त्तिसृधृधम्यम्यश्य-वितृभ्योऽनिः (उ॰ २, ८५)'—इत्यनि-प्रत्ययः। अवति प्रजाः अश्यन्ते वा भूपैः। एतावत्स्वर्थेषु यो योग्यः स बोद्धव्यः। "आ वां रक्षोऽवनिर्न प्रवत्वान् (ऋ॰ सं॰ १, १८१, २)"—"यत्रौ महीमवनिं प्राभि मर्मृशत् (ऋ॰ सं॰ १, १४०, ५)"—इति च निगमौ॥

(१०) उर्वी†। 'ऊर्णुञ् आच्छादने (अदा॰ उ॰)'—अस्मात् 'महति ह्रस्वश्च (उ॰ १, ३०)'—इति उ-प्रत्ययो ण-लोपो ह्रस्वश्च, उरुः। 'वोतोगुणवचनात् (४, १, ४४)'—इति ङीष्। ऊर्णोति आच्छादयति उर्वी। महत्त्वादाच्छादयित्री भूमिः स्वस्मिन् स्थितानां वा पदार्थानाम्। वृणोतेर्वा (स्वा॰ उ॰) पृषोदरादित्वात् (६, ३, १०९) रूपसिद्धिः। 'छादनार्थं विशिष्टम्'

---

* प॰ १२ ७, ३। निरु॰ २, ८।

† प॰ १२ ३ १,—२०। निरु॰ २, २६।

– इति स्कन्दस्वामी। वृणोतेराच्छादनार्थत्वेऽनुवादश्च। 'मा सीमवद्य आ भागुर्वी काष्ठा (ऋ० सं० ८८०,८)'–इति निगम ॥

। (११) पृथ्वी *। प्रथ प्रख्याने (भू० आ०)'— प्रथि म्रदि भ्रस्जां सम्प्रसारण सलोपश्च ( उ० १, २७ )'—इति कु-प्रत्यय सम्प्रसारणञ्च। प्रथतेऽसाविति पृथु। पूर्ववद् ( ४, १, ४४ ) ङीष्। पृथ्वी विस्तीर्णेत्यर्थ। पञ्चाशत्कोटियोजनविस्तीर्णेति पृथिवी। यद्वा, अन्तर्भावितण्यर्थात् प्रथते उणादयो बहुलम् ( ३, ३, १ ), भूतेऽपिदृश्यन्ते (३, ३, २) – इति वचनात् भूते कु प्रत्यय। ब्रह्मणा पूर्वमेव विस्तारितेत्यर्थ। 'तत्पुष्करपर्णे ऽप्रथयत् यदप्रथयत् पृथिव्यै पृथिवीत्वम (य० ब्रा० ११, १९ १३, २ )'— इति हि ब्राह्मणम। पृथुना राज्ञा अवतारिता पृथ्वी — इति चीरस्वामी। 'स्तेगो न क्षामत्येति पृथ्वीम् (ऋ० सं० १०, ३१, ९ )'—इति निगम। 'यत्रैकार्थानां पदाना सन्निपात, तत्रैक तस्य वाचक भवति, अन्येषा निरुक्त्यायोजन कर्त्तव्यम्'— इति मर्यादा †, अतोऽत्र क्षामित्यस्य निरुक्त्या योजनम् ॥

(१२) मही ‡। 'मह पूजायाम्' भूवादि प०)। इन् सर्वधातुभ्य ( उ० ४, ११४ )'—इतीन् प्रत्यय। कृदिकारात् (४, १, ४५ वा०) —इति ङीष्। मह्यते प्रजाभि, महति वा देवता स्वभारावतरणाय। अथवा मानेन स्वगुणेन परिमाणेन

---

* प० ३ ३०। निरु० १ १२ १४।

† व्य व्यासृणां व्याख्याननियम।

‡ प० ११२ ११ ३ ३०। निरु० ४ २१ ५ २२।

स्वस्मादूनं परिमाणं पातालं जहाति अतिक्रामति, मानशब्दाज्जहातेश्च मही। पृषोदरादित्वात् (६, ३, १०९) निर्वाहः। "आ नो महीमरमतिं सजोषा (ऋ० सं० ५, ४३, ६)'—इति निगमः॥

(१३) रिपः। 'रेट्ट गतौ (भू० आ०)', 'क्विब्वचिप्रच्छायतस्तुकटप्रुजुश्रीणाम् (३, २, १७८ वा०)'—इत्यत्र 'प्राक्प्रत्ययनिर्देशात् इष्टसिद्धिः'—इति वचनात् ह्रस्वे रिपः। गौरित्यनेन समानार्थः। यद्वा; 'रिफ कत्थन-युद्ध-निन्दा-हिंसा-दानेषु' तुदादिः परस्मैपदी। क्विपि, फकारस्य पकारो व्यत्ययेन (३,१, ८५)। कत्थन-युद्धादीनस्यां कुर्वन्ति तत्कारिणः। यद्वा; 'लिप उपदेहे (तु० उ०)', लिप्। गोमयादिना आलिप्यते इति लिप्। रलयोरभेदः। तथाच माधवीयनिर्वचनानुक्रमण्यां 'लेपनाद्रेपणादपि'—इति। यद्वा; 'रप लप व्यक्तायां वाचि ( भू० प० )', 'रपेरिच्चोपधायाः (उ० १, २५ )'—इत्युप्रत्यये विधीयमानमित्वं बाहुलकादन्यत्रापि भवति। आलपन्त्यस्यां प्राणिनः इति रिप्, जसि रिपः; एवंरूपस्य वेदे भूयोदर्शनात् यथादृष्टं पाठः। "रिरिह्वांसं रिप उपस्थे अन्तः ( ऋ० सं० १०, ७९, २ )"—"पाति प्रियं रिपो अग्रं पदं वेः (ऋ० सं० ३, ५, ५)"—इति च निगमौ॥

(१४) अदितिः *। 'दोड् क्षये (दि० आ०)'। 'कृत्यल्युटो बहुलम् (३, ३, ११३)'—इति कर्त्तरि क्तिनि छान्दसं ह्रस्वत्वम्, नञ्समासः। अदितिः सकलप्रपञ्चधारणेऽप्यदीना न खिद्यते

---

* प० ११. ९, ११. ३, ३०. ४, १. ४, ५। निरु० ४, २२ ११, २२।

इत्यर्थः। अदितिरदीना (निरु० ४, २२)'—इत्यत्र भाष्ये स्कन्दस्वामी—'यद्यपि नञ्पूर्वात् द्यतेः क्तिनि 'द्यति-स्यति-मा-स्थाम् (७, ४, ४०)'—इतीत्वे च रूपं सिध्यति, तथापि द्यतेर्नित्यमपूर्वादर्थान्वयाच्च 'दीङ् क्षये (दि० आ०)' इत्यस्यैवेद छान्दसं रूपं द्रष्टव्यम्। तथाचोक्तम्—'न सस्कारमाद्रियेत अर्थोनित्यः परीक्षेत (म० भा०)'—इति। "देवेभ्यो अदितये स्योनम् (ऋ० सं० १०, ११०, ४)"—"तमंमृक्षन्त वाजिनमुपस्थे अदितेरधि (ऋ० सं० ६, २६, १)"—इति निगमौ॥

(१५) इळा*। ईड़ स्तुतौ (अदा० आ०)', 'ञि इन्धी दीप्तौ (रु० आ०)'। अनयोः 'अकर्त्तरि च कारके सञ्ज्ञायाम् (३, ३, १९)'—इति घञ्, पृषोदरादित्वात् (६, ३, १०९) ईडेर्ह्रस्वत्वम्, इन्धेर्नकारलोपो धकारस्य डकारो गुणाभावश्च। ईड्यते स्तूयते वास्यां यजमानो देवान्, इन्धे दीप्यतेऽस्यां श्रीभिः। यद्वा; 'इण गतौ (अदा० प०)', 'क्षादिभ्यः कित् (उ० १, ११२)'—इत्यस्मिन् सूत्रे 'बहुलानुवृत्तेः अजमन्तादपि भवति'—इति वचनात् ड-प्रत्ययः, कित्त्वाद्गुणाभावः। गवा समानार्थः। यद्वा 'इल स्वप्नक्षेपणयोः (तु० प०)'—इत्यस्मात् 'इगुपधा-ज्ञा-प्री-किरः कः (३, १, १३५)'—इति क-प्रत्ययः, 'कृत्यल्युटो बहुलम् (३, ३, ११३)'—इति अधिकरणे भवति। क्षिप्यन्तेऽस्यां भावः, स्वपन्तेऽस्यामिति वा; ड-लयोरेकत्वस्मरणात् डत्वम्। यद्वा; 'इला'—इत्यन्ननाम गोनाम वा (निघ० २, ७.–२, ११), इला-अन्नं

---

* प० ११ २, ७, ११ ५, ५। निरु० ११, ४८।

गौर्वा अस्यामस्तीत्यर्श आदित्वात् (५ २, १२७) अच् ; अन्नवती गोमती वा इड़ा। बह्वृचानान्तु 'द्वयोश्चास्य स्वरयोर्मध्यमेत्य सम्पद्यते स डकारो ळकारः (प्राति०)'—इति ळत्वम् इळा, ऋचु उदाहरणबाहुल्याच्च ऋग्वेद-दृष्ट पाठः इळेति। "इळायास्त्वा पदे वयं (ऋ० सं० ३, २८, ४)"—"अया होता न्यसीदो यजीयानिळस्पदे० (ऋ० सं० ६, १, २)" ['इळस्छान्दसत्वादाकारलोपः'—इति स्कन्दस्वामी]—"इळस्पदे समिध्यसे (ऋ० स० १०, १९१, १)"—इति निगमाः॥

(१६) निर्ऋतिः *। निर्ऋतिर्निरमणात् (२, ७)-इति निरुक्तम्। अस्य स्कन्दस्वामी—'निरमणात्=नियतत्वेनावस्थानात्-इत्यर्थः ; रमन्ते वास्यां भूतानि'—इति। तत्र निर्-पूर्वाद्रमेः (भू० आ०) 'कृत्यल्युटोबहुलम् (३, ३, ११३)'—इति कर्त्र्यधिकरणे च क्तिनि (३, ३, ९४) अनुनासिकलोपः, 'रमेर्मतौ बहुलम् (६, १, ३४ वा०)'—इत्यत्र बहुलवचनात् सम्प्रसारणम्। आद्येऽर्थे निर्निश्चलत्वमाह नानवस्थानम् उत्तरत्र धात्वर्थमनुवर्त्तते निः। वैयाकरणपक्षेण तु निरुपसृष्टादर्त्तेः क्तिनि निर्ऋतिः निःक्रान्ताकृतेर्गमनात् निश्चलवदवतिष्ठते इत्यर्थः। "बहुप्रजा निर्ऋतिमाविवेश (ऋ० सं० १, १६४, ३२)"—"अधा मयीत निर्ऋतेरुपस्थे (ऋ० सं० १०, ९५, १४)"—इति च निगमौ॥

(१७) भूः †। भू सत्तायां (भू० प०) सम्पदादित्वात् भावे

* निरु० १, १० २, ०, ०, ३।
† प० ३।' निरु० ७, २० २८।

क्विप् ( ३, २, ८४ वा० )। भवत्यस्यां सर्वमिति भूः। "मूर्द्धा भुवो भवति नक्तमग्निः (ऋ० सं० १०, ८८, ६)'—इति निगमः। रेफान्तं व्यत्ययम्, यथा—"भूर्भुवः स्वः (य० वा० स० ३६, ३)" —इति ॥

(१८) भूमिः। 'भुवः कित् (उ० ४, ४५)'—इति भवतेः मिप्रत्ययः। अर्थः पूर्ववत्। अथवा भूतेऽपि दृश्यन्ते (३, ३,२)' —इति वचनात् भूते मि-प्रत्ययः। 'अभूतभूमिस्तया अभूद्वा इदमिति तद् भूम्यै भूमित्वम्'—इति श्रुतिः। "न्यङ्ङुत्तानाम-न्वेति भूमिम् । ऋ० सं० १०, २७, १३)"—"भूमिर्भूमिमगात्"—इति च निगमौ ॥

(१९) पूषा *। 'पुष पुष्टौ' (भू० दि० क्रया० प०)। 'श्वन्नु-क्षन्पूषन् (उ० १, १५५)'—इत्यादिना कनिन्-प्रत्ययान्तो निपात्यते, निपातनादुपधायादीर्घः। पुष्यति धान्यादिभिः समृद्धा भवति पोषयति वान्नैः प्रजाः। 'सर्वार्थपोषणात् पूषा' इति भट्टभास्करमिश्रः। तथा 'पृथिवी न्यवर्त्तयत् सोषधीभिर्वनस्पति-भिरपुष्यत्' इति श्रुतिः। यद्वा; 'पुष धारणे (चु० प०)'— इति धातुः। धारयति सर्वाणि भूतानि पोषयत्याभरणानीति यथा। "आ पूषञ्चित्रबर्हिषम् ( ऋ० सं० १, २३, १३ )"— इत्यत्र माधवः—'पूषा पोषयतीति तस्य प्रत्यक्षं रूपम्'। "पूषा त्वेतो नयतु हस्तगृह्य (ऋ० स० १०, ८५, २६)"—इति, "स-रस्वत्यै पूष्णेऽग्नये स्वाहा (य० वा० सं० ४, ८)"—इति निगमः ॥

---

* प० १, ६। निरु० ६, ११ १४, १६ ।

(२०) गातुः *। 'गाङ् स्तुतौ' छन्दसि जुहोत्यादिः (भू॰ प॰), 'गाङ् गतौ (भू॰ आ॰)', 'कै गै शब्दे' भ्वादिः (प॰)। 'कमि मनि-जनि-गा-भा-या-हिभ्यश्च (उ॰ १, ७०)'—इति तु-प्रत्ययः। गीयते स्तूयतेऽसौ, स्तुवन्ति वास्यां स्थिता इन्द्रादीन्, गच्छन्त्यस्यां भूतानीति वा, गायन्ति वास्यां स्थिता गायना इति। यद्वा; गम्यतेऽनेनेति गातुर्मार्गः, 'लुगकारेकाररेफाश्चेति वक्तव्यम् ( ४, ४, १२८ वा॰ २ )'—इति मत्वर्थीयस्य लुक्। गातुः मार्गवती हि भूमिः। "इन्द्राय गातुरुशतीव येमे ( ऋ॰ सं॰ ५, ३३, १०)"—"अदर्शि गातु रुरवे वरीयसी ( ऋ॰ सं॰ १, १३६, २)"—इति निगमौ॥

(२१) गोत्रा। 'गुङ् अव्यक्ते शब्दे (भू॰ आ॰)'। 'गु-धृ-वी-पचि-वचि-यमि-[मनि-तनि†]-सदि-क्षदिभ्यस्त्रः ( उ॰ ४, १६२)'—इति त्रप्रत्ययः। गुणः। मृगपक्ष्यादयोऽस्यामव्यक्त-शब्दं कुर्वन्तीति गोत्रा। यद्वा; गोत्राः शैलाः सन्त्यस्याम् अर्शआदित्वात् ( ५, २, १२७ ) अच्। यद्वा; गोशब्दे कर्मण्युपपदे 'त्रैङ् पालने (भू॰ आ॰)'—इत्यस्मात् 'आतोऽनुपसर्गे कः ( ३, २, ३ )'। टाप् ( ४, १, ४ )। गास्त्रायते रक्षति यव-सोदकवत्तया। यद्वा; गोभिरादित्यकिरणैर्वृष्टिप्रदानेन त्रायते रक्षते इति, 'कृत्यल्युटो बहुलम् ( ३, ३, ११३ )'—इति कर्मणि 'आतोऽनुपसर्गे कः (३, २, ३)'। यद्वा; गोशब्दात् 'तस्य समूहः

* प॰ ७, १। निरु॰ ४, २१; २१।
† सिद्धान्तकौमुद्यान्तु नैतौ धातू दृष्ट इत्येव।

(४, २, ३७)—इत्यस्मिन्नधिकारे 'खल-गो-रथात् (४, २, ५०)' —इत्यनुवृत्तौ 'इनि-त्र-कट्यचश्च' (४, २, ५१)'—इति त्र-प्रत्ययः। गोत्रा, गवां समूहो मत्वर्थीयोऽकारः। गोसमूहोऽस्यामस्तीति गोत्रा। निगमोऽन्वेषणीयः * ॥

इत्येकविंशतिः पृथिवी-नामधेयानि ॥ "उवाच मे वरुणो मेधिराय (ऋ० सं० ७, ८७, ४)"—इत्यत्र माधवः—'उवाच वरुणो मेधाविने'-इति स तत्रैकविंशतिनामानि काचिद् गौर्बिभर्त्तीति पृथिवीमाह तस्याहि यास्कपठितान्येकविंशतिर्नामानीति ॥ १ ॥

हेम[१]। चन्द्रम्[२]। रुक्मम्[३]। अयः[४]। हिरण्यम्[५]। पेशः[६]। कृशनम्[७]। लोहम्[८]। कनकम्[९]। काञ्चनम्[१०]। भर्म[११]। अमृतम्[१२]। मरुत्[१३]। दत्रम्[१४]। जातरूपम्[१५]। इति पञ्चदश हिरण्यनामानि + ॥ २ ॥

---

* बहुमन्त्रेषु श्रूयते 'गौरा'-पदम्, परं न तत् क्वापि पृथिवीपरमिति भाति। एवञ्च गोत्रेत्यस्य पृथिवीनामसु पाठः किं मूलेन? गोत्रेदस्य सायणादि-व्याख्यानुगामित्व तत्र तत्र मन्त्रेषु व्याख्यातं दृश्यमुरवीतार्थम्, तथा च न सर्वत्रैव गोत्रस्य मेघार्थत्वे बाधः क्वचित् क्वचित् पृथिवीवाचकत्वेनापि तस्य दृष्ट आये तदा तदर्थस्य निगमाभिव्यक्ता इति ध्येयम्।

(१) "हेमा"—इति ख। 'हेमा'—इति ग।

+ "इति हिरण्यम" क।

(१) हेम *। 'हि गतौ वृद्धौ च (स्वा० प०)'। अस्मा-द्धातोः 'नामन्-सीमन्-सोमन्-हेमन्-रोमन्-लोमन्-व्योमन्-विधर्मन्-पाप्मन् † (उ० ४, १४६)'—इति मनिन्नन्तं निपात्यते। हिनोति गच्छति अनेन सुखं पुरुषः, गम्यते वा तदर्थिभिः, गच्छति वा स्वयं कटकादिरूपां विकृतिम् ; हिनोति वाणिज्या-दिना प्रतिदिनं वर्द्धते ; 'ताम्रादुपरि लेपनाद् वर्द्धते'—इति सुबोधिनी ‡। अथवा हितमापदि निहितं वा भूम्यादौ दधाते-र्हिरादेशो निपातनात्। हेम। "अस्य प्रेषा हेमना पूयमानः ( ऋ० सं० ९, ९७, १)"—"अश्वो न खे दम आ हेम्यावान् ( ऋ० सं० ४, २, ८ )"—इति च निगमौ §। हेम्यावान्—हिरण्मयकक्ष्यया युक्तः॥

(२) चन्द्रम् ‖। 'चदि आह्लादने दीप्तौ च (भू० प०)' अस्मात् 'स्फायि-तञ्चि-वञ्चि-शकि-क्षिपि-क्षुदि (उ० २, १२)'—इत्या-दिना रक्। चन्दयति, आह्लादयति तद्वत् दीप्यते वा स्वयं तैजसत्वात्। यद्वा ; णिजन्ताच्चदेर्बाहुलकात् णिलोपः, दीप-यति धारयितृन्,—दीप्यतेऽनेन धारयितेति वा। कान्त्यर्थो वा चदिः, 'चन्द्रः चन्दतेः कान्तिकर्मणः (निरु ११,५)'—इत्युक्तः।

* प० १२।

† सिद्धान्तकौमुदीधृतपाठस्तु 'नामन् सीमन् व्योमन् रोमन् लोमन् पाप्मन् ध्यामन्'—इत्येव।

‡ उणादिवृत्तिः।

§ ऋक्संहितायां नापरो दृश्यते निगमः।

‖ निरु० ११, ५।

काम्यते सर्वैः इति चन्द्रम् । "ये वध्वश्चन्द्रं वहतुम् (ऋ० सं० १०, ८५, ३१)"—"दक्षिणा चन्द्रमुत यद्धिरण्यम् (ऋ० सं० १०, १०७, ७)"—इति च निगमौ ॥

(३) रुक्मम् । 'रुच दीप्तौ (भू० आ०)' । 'युजि-रुचि-तिजां कुश्च (उ० १, १४३)'—इति मक् प्रत्ययः कुत्वं च । रोचते तदतिशयेन दीप्यते तेन तदिति च रुक्मम् । "आ रुक्मैरायुधा नरः— (ऋ० सं० ५, ५२, ६)"—"एष रुक्मिभिरीयते (ऋ० सं० ८, १५, ५)"—इति च निगमौ ॥

(४) अयः । 'इण् गतौ (अदा० प०)' । असुन् (उ० ४, १८४) एति गच्छति अङ्गुलीयकादिरूपेण शरीरम्, ऋवय-क्रय-संविभागादिना वा, पुरुषात् पुरुषान्तरं गच्छत्यनेन धर्मदानादिनेति वा । "अयः शीर्षा मदेरघुः (ऋ० सं० ८, १०१, ३)"—इति निगमः ॥

(५) हिरण्यम् । 'हृञ् हरणे (भू० उ०)' । अस्मात् 'हर्यतेः कन्यन् हिर च (उ० ५, ४५)'—इति विधीयमानः कन्यन् प्रत्ययो हिरादेशश्च बाहुलकाद् भवतः । तथाच अन्यत्रित्यधिकृत्य 'हृञ हृञ'—इति भोजसूत्रम् । ह्रियते जनाज्जनमिति वा संव्यवहारार्थम्, द्रव्यस्वभावत्वात् नैकत्रावस्थायित्वं तस्य । अथवा हिधातुज रूपम्,—हिनोतेः रमतेश्च धातुद्वयात् समुदितात् कन्यन् प्रत्ययो बाहुलकाद्रूपसिद्धिश्च; हितश्च तत् आपदि दुर्भिक्षादौ, रमयति च सर्वदा सर्वमिति । अथवा हर्यतेः प्रेप्साकर्मणः (निरु० २, १०);—हर्यतेः कन्यन् हिरश्च

क्रियतेर्यथाप्राप्तं रूपम्। सर्वैर्हि तत् सर्वदा प्राप्तुमिष्यते। 'हर्यति स्वप्रभया दीप्यते'—इति सुबोधिनीकारः। "हिरण्यरूपः स हिरण्यसन्दृग् (ऋ० सं० २, ३५, १०)"— इति निगमः॥

(६) पेशः *। 'पिश गतौ (तु० प०)'। असुन्। पयइत्यनेन समानार्थम्। "विवन्धुरेण त्रिवृता सुपेशसा (ऋ० सं० १, ४७, २)"—इति निगमः। "हिरण्ययेन रथेन (ऋ० सं० ८, ५, ३५)"—हिरण्ययी वां रभिः ( ऋ० सं० ८, ५, २८ )"— इत्यादौ अश्विनोरथस्य हिरण्मयकेश्युक्तेः पेशोऽत्र हिरण्यम्। बृहदारण्यके—'तद्यथा पेशस्कारो पेशसोमात्रा मपादायान्यं नवतरं कल्याणतरं रूपं तनुते ( ४, ४, ४ )'—इति। यथा। वाजसनेयके "सरस्वती मनसा पेशलम् (१९, ८३)"—इत्यत्र 'पेश इति हिरण्यनाम रूपनाम वा'—इत्युवटेन व्याख्यातम्॥

(७) कृशनम् †। 'कृश तनूकरणे (दि० प०)'। कृ-पृवृजि-मन्दिनि-धाञ्भ्यः क्युः (उ० २, ७६)'—इति विधीयमानः क्युर्बाहुलकाद् भवति। कृश्यति तनूकरोति यम्। अत्र माधवस्तु—'कृशिर्दीप्त्यर्थः। कृश्यति स्वप्रभया दीप्यते; अपि वा कर्शयति संसृष्टं, कृशमेव वा भवति संध्मानतो रजतात्'—इति। "अहिरण्य: कृशनिनो निरेके (ऋ० सं० ७, १८, २३)" —"अभि श्यावं न कृशनेभिरश्वम् (ऋ० सं० १०, ६८, ११)"

* प० १, ७। निरु० ८, ११।

† प० १ ३।

—"अभिष्टेतं क्षर्षनैर्विखरूपम् ( ऋ० सं० १, ३५, ४ )"—इति निगमाः ॥

(८) लोहम्। 'लुह कल्यनादौ (भू० प०)'। घञ् (३, ३, २१)। कल्यते श्लाघतेऽनेनात्मा,-त्रिवर्गसाधनत्वात् पुरुषैः सम्प्रार्थ्यते वा। 'लूञोह:—इति तु श्रीभोजदेवः। लुनाति छिनत्ति पापसम्बन्धं पात्रे दीयमानम्। निगमोऽन्वेषणीयः * ॥

(९) कनकम्। 'कनी दीप्तिकान्तिगतिषु ( भू० प० )। 'क्षुआदिभ्यः सञ्ज्ञायाम् ( उ० ५, ३६ )'—इति वुन्-प्रत्ययो धात्वर्थेष्वपि। रुक्मादिवदर्थोऽनुसन्धेयः। निगमोऽन्वेषणीयः ॥

(१०) काञ्चनम्। अत्र सुबोधिनी—'कचि दीप्तिबन्धनयोः (भू० आ०)। कञ्चते वर्णेन दीप्यते बध्यते कुण्डलादिरूपेणेति 'युच् बहुलम् ( ३, ३, १२० )'—इति युच् प्रत्ययः। दीर्घोऽत्र बाहुलकात्। निगमोऽन्वेषणीयः ॥

(११) भर्म †। 'डु भृञ् धारणपोषणयोः (जु० उ०)। मनिन् ३, २, ७५)। भ्रियते धार्यते, अङ्गुल्यादिभिर्धार्यते आपदर्थमिति वा, पोषयत्यनेन कुटुम्बमिति वा। हरतेर्वा (भू०उ०) मनिनि 'ह्रग्रहोर्भश्छन्दसि ( सि० कौ० वै० ३ अ० )'—इति भकारः। हिरण्येन हरति-धातुजेन समानार्थम्। "सुवीराभिस्तिरते वाजभर्मभिः ( ऋ० सं ८, १९, ३० )"—"अरिष्टभर्मन्नागहि (ऋ० सं० ८, १८, ४ )"—इति च निगमौ। 'वाज-

---

* श्रूयते तु लोह पद यजुर्वाजसनेये—"लोहञ्च मे सीसञ्च मे (१०, १३)" —इति। 'लोह कांस्य रजत कनक वा'—इति च तद्व्याख्याने महीधरः।

† निरु० ७, २५।

रोचयति ; मातेः पूर्वार्द्धं, रौतेर्वोत्तरार्द्धम् ; पृषोदरादित्वात् (६, ३, १०९) साधु। हिरण्यं हि अग्न्यादि-तेजस्वि-पदार्थेभ्यो मितं भोगादिभ्योऽमितं रोचते ; अर्थिभ्योदीयमानं लोकद्वयेऽपि कीर्त्तिं कारयति। तथाच सुभाषित-श्लोकः—'शृणु पाणे! त्वयि न्यस्तं कियत्कङ्कणादि कङ्कणम्। इदमेवार्थिहस्तस्थं राव-यति च रोचते'। यद्वा ; मृङो रुतिः,—म्रियतेर्धातोः (तु० आ०) रुतिप्रत्यये रूपम्। म्रियन्तेऽनेन पुरुषा इति मरुत्,—एतदर्थं हि चौरादिभिः पुरुषाः हन्यन्ते। निगमोऽन्वेषणीयः*॥

(१४) दत्रम्। 'डु दाञ् दाने (जु० उ०)'। 'अमि-चिमि-मिदि-शंसिभ्यः क्त्रः (उ० ४, १५९)'—इति विधीयमानः क्त्रो बाहुलकात् (३, ३, १) भवति। 'दो दद् घोः (७, ४, ४६)'—इति दद्भावः। दीयते याचे दत्रम्†। "इन्द्र! यत्ते माहिनं दत्रमस्य० (ऋ० सं० ३, ३६, ८)"—इति निगमः॥

(१५) जातरूपम्। 'जनी प्रादुर्भावे (दि० आ०)'। निष्ठा-तकारः। 'जनसनखनाम् (६, ४, ४२)'—इत्यात्वम्। जातः। 'रुच दीप्तौ (भू० आ०)'। 'खष्प-शिल्प-शष्प-वाष्प-रूप-पर्प-तल्पाः (उ० ३, २६)'—इति प-प्रत्ययान्तो निपातितः, निपा-

---

* मरुच्छब्दयुक्तास्तु बहवो मन्त्रा श्रूयन्ते, परं तेषु हिरण्यवाचिन एव मरुतोऽन्वेषणप्रयासः श्लोकस्याय इति भावः।

† क्त्रप्रत्यये तद्भावे दत्रमिति द्वितकारात्मकरूपं स्यात् परं न तदोप-लभ्यते क्वचिदपि।

तस्मादुकारस्य दीर्घश्चकारलोपश्च। रोचते रूपम्। अनाहार्यतया जातं रूपमस्य जातरूपम्। तथाच श्रीरामायणे स्कन्दोत्पत्तौ—'इह हैमवते भागे गर्भोऽयं सन्निवेश्यताम्'—इत्यतः 'परिनिक्षिप्यमाणे गर्भे तु तेजोभिरभिरञ्जितम्। सर्वं पर्वतसन्नद्धं सौवर्णमभवद्वनम्। जातरूपमिति ख्यातं तदा प्रभृति राघव।। सुवर्णं पुरुषव्याघ्र! हुताशनसमप्रभम्'—इति (बा० का०)। जातं रूपं सौन्दर्यमनेन धारयितृणामिति वा जातरूपम्। "जातरूपमयेन च पवित्रेणान्तर्धायाभ्यषिञ्चति (ऐ० ब्रा० ८, १८)"—इति निगमः॥

इति पञ्चदश हिरण्यनामानि॥ २॥

अम्बरम्[१]। वियत्[२]। व्योम[३]। बर्हिः[४]। धन्व[५]। अन्तरिक्षम्[६]। आकाशम्[७]। आपः[८]। पृथिवी[९]। भूः[१०]। स्वयम्भूः[११]। अध्वा[१२]। पुष्करम्[१३]। सगरः[१४]। समुद्रः[१५]। अध्वरम्[१६]। इति षोडशान्तरिक्षनामानि * ॥ ३॥

(१) अम्बरम् †। 'अबिड् शब्दे (भू० पा०)'। 'लट-

(९) "अम्बा" ख।
(११) "स्वयम्भूः"—इत्यपि दृष्टं देवराजेन केषुचित्।
(१४) "सगरम्" ग. C. D. F. ङ। ऋ० सं० १०, ८८, ४. ब्रा० भा०।
* "इति षोडशान्तरिक्षनामानि" ख। "इत्यन्तरिक्षस्य" ग।
† ऋ० ६, १६।

रादयश्च (उ॰ ५, ४२)'—इति अरच्-प्रत्ययान्तो निपात्यते। अम्बन्ते शब्दायन्तेऽस्मिन् मेघाः, अम्बते शब्दायते वा स्वयं वायुमेघादिसंसर्गात्,—आकाशगुणो हि शब्दः। अथवा अमे-र्धातोः 'भृमृशीङ्तृचरित्सरितनिधनिमिमस्जिभ्य उः' ... 'अर्जिदृशिकम्यमिपसिबाधामृजिपशितुक्धुक्दीर्घहकाराश्च (उ॰ १, २६)'—इति अमतेर्विधीयमान उ-प्रत्ययो बुगागमश्च बाहुलकाद् (३, ३, १) भवति; तस्मिन्, गुणे, र-परत्वे च रेफस्य मकारश्च; अम्बु। अमतेरेव वा तेनैव सूत्रेण उ-प्रत्ययो बुगागमश्च। उभयथापि गच्छति देशाद्देशान्तरं गम्यते वा प्राणिभिरित्यम्बु जलम्। तद्राति ददातीत्यम्बरो मेघः। 'आतोऽनुपसर्गे कः (३, २, ३)', पृषोदरादित्वात् (६, ३, १०९) उकारस्याकारः। तद्वदाकाशमप्यम्बरम्। 'लुगकारेकाररेफाश्च वक्तव्याः (४, ४, १२८ वा॰ २)'—इति मत्वर्थीयस्य लुक्। तदेव वा वर्षासु प्राणिभ्य उदकं ददातीति अम्बरम्। अथवा अम्बुशब्दे उपपदे राजतेर्धातोः 'अन्येष्वपि दृश्यते (३, २, १०१)'—इति दृशिग्रहणात् डः; अपिशब्दस्य सर्वोपाधिव्यभिचारार्थत्वादर्थ-सिद्धिः। अथवा अम्बुवद्राजते स्वच्छस्तिमितसाराम्बुवदवभासते। कल्पितौपमानञ्चैतत्, तद्यथा-'पुञ्जीकृतमिव ध्वान्तं मेघोभाति मतङ्गजः। सर शरत्प्रसन्नाम्भोनभःखण्डमिवोज्झितम्॥' पर-मार्थतः स्वरूपमवकाशः। अथवा अम्बुमत् भवति रोमत्व-र्थीयः; पूर्ववदुकारस्याकारः; अन्तरिक्षं हि वर्षोदकेन तद्वत्। "यन्नासत्या परावति यद्वास्थो अध्यम्बरे (ऋ॰ सं॰ ८, ८, १४)" —इति निगमः॥

(२) वियत्। 'यमु उपरमे ( भू० प० )'—इत्यस्मात् औणादिके क्विपि, 'गमः क्वौ (६, ४, ४०)'—'गमादीनामिति वक्तव्यम् ( ६, ४, ४० वा० )'—इत्युक्तेरनुनासिकलोपः। 'ह्रस्वस्य पिति कृति तुक् ( ६, १, ७१ )'। विगतं यमनमुपरमणमस्मादिति वियत्;—अन्तरिक्षं हि सर्वत्र व्याप्तत्वात् न क्वचित् उपरतम्। 'वियच्छति न विरमति'—इति क्षीरस्वामी। यद्वा; विपूर्वात् 'यती प्रयत्ने ( भू० आ० )'—इत्यस्मात् क्विप्। विविधं यतन्तेऽस्मिन् प्राणिनः;—आकाशे हि सर्वे व्याप्रियन्ते। निगमोऽन्वेषणीयः *॥

(३) व्योम †। विपूर्वादवतेर्व्याप्त्यर्थत्वात् ( भू० प० ) औणादिके 'सर्वधातुभ्यो मनिन् (उ० ४, १४०)'—इति सूत्रेण मनिन्-प्रत्यये 'ज्वरत्वरस्रिव्यविमवामुपधायाश्च ( ६, ४, २० )'—इत्यूठि गुणः। व्यवति व्याप्नोति सर्वं जगत्। यद्वा; अवतिर्गत्यर्थः ( भू० प० ) भावे मनिन् ( उ० १, १३८ ),—ओम; अवनं गमनं विविधमस्मिन् विद्यते। यद्वा; रक्षणार्थः ( भू० आ० ),—विशेषेणावति प्राणिनोऽवकाशप्रदानेन। उणादौ तु 'नामन्-सीमन्-व्योमन् ( उ० ४, १४६ )'—इत्यादिना 'व्येञ् संवरणे (भू० उ०)'—इत्यस्मान्मनिनि उत्वं निपात्यते। दीयते तद्वायुना व्योम। तथाच निरुक्तम्—'योनिरन्तरिक्षं महानवयवः

---

* ऋक्संहितायामपि 'वियतम्' ( ७, १८, ७ ) पद तत्र सायणेन 'प्रियितात्मम्'—इत्यर्थे कृतः।

† प० ६,१९। निरु० ११,४०।

परिवीतो वायुना (२, ८)'—इति । इदं निर्वचनमेतत्पद-कारयोः शाकल्यात्रेययोरनभिमतं वीत्यस्मिन्नवगृहीतत्वात् । "सहस्राक्षरा परमे व्योमन् (ऋ० सं० १, १६४, ४१)"—"सत्यासाशिर पूर्व्ये व्योमनि (ऋ० सं० ९, ७०, १)"—इति च निगमौ ॥

(४) बर्हिः *। बृहि वृद्धौ (भू० प०)। 'बृंहेर्नलोपश्च (उ० २, १०२)'—इति इसि-प्रत्ययः। 'बृंहति वर्द्धतेऽनेन प्राणिजातम्,—सर्वे हि प्राणिन आकाशे वर्द्धन्ते; परिवृढं वा स्वयं विभुत्वात्। "यस्य त्रिधात्ववृतं बर्हिः (ऋ० सं० ८, १०२, १४)" —इति निगमः ॥

(५) धन्व †। 'धवि रिवि धवि गत्यर्थाः (भू० प०)'। इदित्वान्नुम् (७, १, ५८)। कनिन्युवृषितक्षिराजिधन्विद्युप्रतिदिवः (उ० १, १५४)'—इति कनिन्। धन्वन्ति गच्छन्ति अस्मादापः। यद्वा; 'धन धान्ये (दि० आ०)', अनेकार्थत्वादर्थनार्थः। क्वनिप्। धन्यते अर्थ्यते ऽवकाशप्रदानाय, देवतात्वात् स्व स्वमभीष्टं वा। "यः परस्याः परावतस्तिरोधन्वातिरोचते (ऋ० सं० १०, १८७, २)"—इति निगमः ॥

(६) अन्तरिक्षम् ‡। 'अन्तरिक्षं कस्मात्? (निरु० २, १०)'—इत्यादि भाष्यस्य स्कन्दस्वामि-ग्रन्थो यथादृष्टं लिख्यते—

---

* प० १२ ५ २। निरु० ८, ८।
† प० ४, २,। निरु० ५, ५ ८, १८।
‡ निरु० २ १०।

'अन्तरामध्ये सर्वभूतानां चान्तं निःक्रियं वा प्रान्तमव्यूहं विष्कम्भस्थानात्मकत्वात्। अन्तरा इमे रोदसी चियतीति वा। अन्तरेमे चीणाविति वा। एवमनेकविकल्पमुत्तरपरम्। पूर्वशरीरेष्वन्तरक्षयमिति वा; अन्तः शब्दात् पूर्वपदमक्षयशब्दादुत्तरपदं विनाशिष्वप्यविनाशीत्यर्थः'—इति। सर्वत्र, पृषोदरादित्वात् (६, ३, १०९) साधु। न यस्य द्यावापृथिवी न धन्व नान्तरिक्षम् (ऋ० सं० १०, ८९, ६)"—इति निगमः॥

(७) आकाशम्। आङ् पूर्वात् 'काशृ दीप्तौ (दि० आ०)' —इत्यस्मात् 'पुंसि सञ्ज्ञायां घः प्रायेण (३, ३, ११८)'—इति घ-प्रत्ययः। आ समन्तात् काशन्ते दीप्यन्ते सूर्यादयोऽत्र। यद्वा; नञ्-पूर्वात् काशेः पचाद्यच् (३, १, १३४), नञश्छान्दसो (६, ३, १३६) दीर्घः। न काशते, पृथिव्यादिवत् अप्रत्यक्षत्वात्। तथाच श्रुतिः—'तिस्रो मह्वोरुपरास्तस्थुरत्या गुहा द्वे निहिते दर्श्येका (ऋ० सं० १, ५६, २)'—इति। 'तस्मान्नान्तरिक्षं पश्यति'—इति च। "तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः (तै० उ० २, १)"—इति निगमः॥

(८) आपः *। 'आप्लृ व्याप्तौ (भू० प०)'। 'आप्नोतेर्ह्रस्वश्च (उ० २, ५५)'—इति क्विप्-प्रत्ययः उपधाह्रस्वश्च। जसि 'अप्तृन्तृच्स्वसृ (६, ४, ११)'—इत्यादिना दीर्घः। व्याप्नोति ह्यन्तरिक्षं सर्वं जगत्, आप्यते वा प्राणिभिः। अप्-शब्दस्य नित्यं बहुवचनान्तत्वात् बहुवचनान्तस्य पाठः। * * *।

* प० १९. ६, १। निरु० ९, २६।

"तृतीयमप्सु नृमणा अजस्रम् (ऋ० सं० १०, ४५)"—इति निगमः ॥

(८) पृथिवी *। प्रथ प्रख्याने (भू० आ०)। 'प्रथेः षिवन् सम्प्रसारणं च (उ० १, पा०)'। 'षिद्गौरादिभ्यश्च (४, १, ४१)'—इति ङीप्। प्रथते पृथिवी। "यः पार्थिवस्य क्षम्यस्य राजा (ऋ० सं० २, १४, ११)"—"स दाधार पृथिवीं द्यामुतेमाम् (ऋ० सं० १०, १२१, १)"—इति च निगमौ ॥

(१०) भूः †। भवतेः (भू० प०) क्विप्। भवत्यस्माद् वृक्षादिः। निगमोऽन्वेषणीयः ॥

(११) स्वयम्भूः। स्वयं भवति न केनचित् सृज्यते, केषाञ्चिद् वादिनां पक्षे नित्यं ह्याकाशम्। स्वयम्भ्वित्युकारान्तं केषुचित्। तदा 'मृगय्वादित्वात् (उ० १, ३६)' कुः। निगमस्यादर्शनात् ‡ उभयमपि लिखितम्, निगमदर्शनान्निर्णयः कार्यः ॥

(१२) अध्वा। 'अद भक्षणे (अदा० प०)'। 'अदेर्ध च (उ० ४, ११२)'—इति वनिप् धकारश्चान्तादेशः। अदनं स्वस्तिगच्छतां पथ्यादीनां विषमस्थानाभावात्। यद्वा; अधिर्गत्यर्थः कश्चिद्धातुः, बाहुलकात् पूर्वेण वनिप्, गच्छन्त्यस्मिन् देवादय इत्यध्वा। 'अधेर्गतिक्रियात्'-इति माधवः। यद्वा; अध्वा

* प० ५, २ ५ ६। निरु० १, १२ ८, २१ ११, २६. १२, ३०।

† पु० १।

‡ अन्तरिक्षवाचकत्वेन स्वयम्भूशब्दस्य सायणादिभिर्व्याख्यातत्वादित्येव भाव, स्वयम्भूपदघटितमन्त्रस्तु दृश्यते एव स्वयम्भूर्भामो अभिमातिषाह (ऋ० सं० १०, ८३, ४)—इति।

मार्गोऽस्मिन् विद्यते मत्वर्थीयस्य लुक्,—सन्ति ह्याकाशे मेघपथादयः। 'अर्तधेश'—इति भोजसूत्रम्। 'अत सातत्यगमने (भ्वा० प०)'। सततं गच्छन्त्यत्र सूर्यादयइत्यध्वा। "भूमा रेजन्ते अध्वनि प्रविक्ते (ऋ० सं० ६, ५०, ५)"—"असमने अध्वनि वृजिने पथि (ऋ० सं० ६, ४७, १३)"—इति निगमौ॥

(१३) पुष्करम् *। 'पुष पुष्टौ (स्वा० प०)'। 'पुषः कित् (उ० ४, ४)'—इति करन् प्रत्ययः। पुषिरत्रान्तर्णीतण्यर्थः, पोषयति भूतान्यवकाशप्रदानेन उदकदानादुपकारेण च। 'पुष्क वारि राति पुष्करम्'—इति क्षीरस्वामी। पुषेरन्तर्णीतण्यर्थात् 'वृमृभृशुषियुधिभ्य. कित् ( ? )'—इति विहित. करन् प्रत्ययो बाहुलकाद् भवति। 'कृदृकत्रवृचीचीपुषिमुषिमूङ्शुभ्यः कित्'—इति करः भोभोजदेवः। पोषयति भूतानीति। पुष्कोपपदाद्रातेः 'आतोऽनुपसर्गे कः ( ३, २, ३ )'। यद्वा; वपुरित्युदकनाम ( निघ० १, १२ ), तत्कर्तुं शीलमस्येति 'कञो हेतुताच्छील्यानुलोम्येषु (३, २, २०)'—इति टः, वपुष्करं सद् वकारलोपेन पुष्करम्; पृषोदरादिः। "विश्वे देवाः पुष्करे त्वाददन्त (ऋ० सं० ७, ३३, ११)"—इति निगमः॥

(१४) सगरः। सहशब्दपूर्वात् 'गॄ निगरणे (तु० प०)'—इत्यस्मात् 'ऋदोरप् ( ३, ३, ५७)', सहस्य सभावः (६, ३, ७८) सह गिरत्यस्मिन् स्थिता आदित्यरश्मयो भौमरसमिति सगरः। सह उद्गिरन्त्यस्मिन् स्थिता मेघा वर्षोदकमिति वा। यद्वा;

* नि०१, १०।

गीर्यते अभ्यवह्रियते विद्यते इति गरः उदकम्, तेन सह वर्त्तते इति सगरः। तथाच 'रश्मयश्च देवा गरगिरः'—इत्यत्र रुद्र(रा)हदेवः 'गरमुदकं गिरन्ति गरगिरः'—इति भाष्यं कृतवान्। यद्वा; 'गॄ शब्दे (क्रया॰ प्या॰ प॰)'—इत्यादि। गीर्यते इति गरः शब्दः पूर्ववत्, गरेण शब्देन सह वर्त्तते इति सगरः; —आकाशोहि स्वगुणेन शब्देन सहैव सर्वदा वर्त्तते। "अयः मेरयं सगरस्य बुध्नात् (ऋ॰ सं॰ १०, ८९, ४)"—इति निगमः॥

(१५) समुद्रः *। समुद्रवन्ति सङ्गता जर्द्धं द्रवन्ति गच्छन्त्यस्मादापोरश्मिभिराक्षप्यमाणा आदित्यमण्डलम्। समुत्-पूर्वात् द्रवतेर्गत्यर्थात् 'अन्येष्वपि दृश्यते (३, २, १०१)'—इति अपादाने ड-प्रत्यये टि-लोपे च रूपम्। यद्वा; संहता अभिद्रवन्त्येन मापो भौमरसलक्षणा वायुना प्रेर्यमाणाः आदित्यमण्डलाद्वा वर्षाकाले रश्मिभिः प्रवर्त्तमानाः। अत्र उदित्येष उपसर्गोऽभील्यर्थे वर्त्तते; कर्मणि ड प्रत्यय इति विशेषः। सम्मोदन्तेऽस्मिन् भूतानि अन्तरिक्षचारीणीति वा। सम्पूर्वात् 'मुद हर्षे (भू॰ आ॰)'—इत्यस्मात् 'स्फायितञ्चिवञ्चि (उ॰ २, १२)'—इत्यादिना अधिकरणे रक्-प्रत्यये, समो म-लोपे च रूपम्। यद्वा; 'सम्'—इत्येकीभावे, उदकात् उच्छब्दः, रो मत्वर्थीयः। एकीभूतमुदकमस्मिन् विद्यते वर्षास्विति उदकशब्दस्योद्भावश्छान्दसः। यद्वा; सम्पूर्वात् 'उन्दी क्लेदने (रु॰ प॰)'—इत्यस्मात् 'स्फायितञ्चिवञ्चि (उ॰ २, १२)'—इत्यादिना कर्त्तरि रक्-प्रत्यये किच्चा-

* प॰ ५, ६। निरु॰ २, १० १०, ११ ११, ४१. १२, २१।

वलोपे च समुद्रः। समुनत्ति वर्षेण भुवनं समुद्रः। "एकः सुपर्णः स समुद्रमा विवेश (ऋ० सं० ८, ६, १६, ४)"—इति निगमः॥

(१६) अध्वरम्*। अध्वा व्याख्यातः (३१पृ० १४प०)। अध्वानं मार्गं राति ददाति (अदा० प०) यस्मिन् गच्छतां पश्वादीनां। यद्वा; अध्वा मार्गो विद्यतेऽस्मिन् मेघादीनाम्। रो मत्वर्थीयः। यद्वा; ध्वरतिर्हिंसाकर्मा (निघ० २, १९), तत्प्रतिषेधः। अध्वर्त्तव्यं न हिंस्यमित्यर्थः। नञ्-पूर्वात् ध्वरतेः 'पुंसि सञ्ज्ञायां घः प्रायेण (२, ३, ११८)'—इति घः। "शिशू क्रीळन्तौ परि यातो अध्वरम् (ऋ० सं० ८, ३, २३, ३)"—इति निगमः। 'अध्वरं यज्ञम्'—इति स्कन्दस्वामी व्याख्याति; तदा निगमोऽन्वेषणीयः॥

इति षोड़शान्तरिक्षनामानि॥ ३॥

स्वः[१]। पृश्निः[२]। नाकः[३]। गौः[४]। विष्टप्[५]। नभः[६]। इति षट् साधारणानि॥ ४॥

स्वरादीनि षट् तु भाष्यकारेण स्कन्दस्वामिना च कृतव्याख्यानानीति नाम्नाभिरत्रोच्यन्ते॥ ४॥

---

* प० २, १७। निरु० १, ८. ९, ११, २०, १९।

(१) प० १२। निरु० २, १४. ५, ३. १८. ११, ७।

(२) निरु० २, १४। (३) "नाका." ख, छ। निरु० २, १४।

(४) पृ० १, १। ६पृ० ४प०। (५) निरु० २, १४. ५, २०।

(६) प० १, १९. २, १०। निरु० २, १४।

खेदयः[1] । किरणाः[2] । गावः[3] । रश्मयः[4] । अभीशवः[5] । दीधितयः[6] । गभस्तयः[7] । वनम्[8] । उस्राः[9] । वसवः[10] । मरीचिपाः[11] । मयूखाः[12] । सप्तऋषयः[13] । साध्याः[14] । सुपर्णाः[15] । इति पञ्चदश रश्मिनामानि * ॥ ५ ॥

(१) खेदयः । 'तेषामादितः साधारणानि पञ्चाश्वरश्मिभिः (नि २, १५)'—इत्युक्तेः पूर्वमादित्यरश्मिनामानन्तरमश्वरश्मीनाञ्च निर्वचन प्रदर्श्यते' । 'खिद दैन्ये' दिवादिः रुधादिश्च आत्मनेपदी, 'खिद परिघाते तुदादिर्मुचादिः परस्मैपदी । 'अकर्त्तरि च कारके सञ्ज्ञायाम् ( ३, ३, १९ )'—इति घञ् । खिद्यते खिद्यते ऽनया, लोको घर्मकाले, अश्वो बन्धनकाले । यद्वा ; परिघ्नन्ते सर्वतो हिंस्यन्ते अनया लोक आदित्येन, अश्वो बन्धनकाले । यद्वा ; अनेकार्थत्वात् धातूनां खिदिः छेदने वर्त्तते । तथाच 'खिदनं छेदनम्'—इति माधवः । अस्मात् पचाद्यचि ( ३, १, १३, ४ ) खेदति छिनत्ति नाशयति तमः । तथाहि 'दोषञ्छिन्न †'—इत्यादौ छिदिर्नाशने दृष्टः ; घञि छिद्यते-

(४) "रश्म्य" ख, क ।  (६) "दिधीतय" ष, क ।

(१२) "मयुषा" ख । इह स्वराद्युदिर्मात्राद्यपि प्रयोगे ।

(१३) "सप्तर्षय" ष ।

* "इति रश्मीनाम्" ग ।

† लौकिकव्यवहारएव ।

ऽश्वोऽनयेति खेदा अश्वरश्मिः। तृतीयैकवचनान्तस्य पाठो यथादृष्टः। "खेदया त्रिवृता दिवः ( ऋ० सं० ६, ५, १५, ३ )"—इत्यश्वरश्मेर्निगमः, आदित्यरश्मेरन्वेषणीयः * ॥

(२) किरणाः। 'कॄ विक्षेपे' तुदादिः ( प० ), 'कॄञ् हिंसायाम्' क्र्यादिः ( प० )। 'कॄपॄवृजिमन्दिनिधाञ्भ्यः क्युः ( उ० २, ७६ )'—इति क्यु-प्रत्ययः। किरन्ति तापम् ; एकत्रौष्ण्येन, इतरत्र बन्धनेन। कीर्यन्ते वा ; आदित्येन दिक्षुखेषु, अश्ववालेनाश्वग्रीवादिषु। यद्वा ; कृणन्ति हिंसन्ति तमः, हिंस्यन्तेऽभिरश्वकिरणाः। "भिया इळ्हासः † किरणा नैजन् ( ऋ० सं० १, ५, ४, १ )"–इति निगमः आदित्यरश्मेः। "रेणुं रेरिहत् किरणं ददश्वान् (ऋ० सं० ३, ७, १२, १ )"—इत्यश्वरश्मेः ॥

(३) गावः ‡। व्याख्यातः पृथिवीनामसु (१, १)। गच्छन्ति सर्वतस्तमो विहन्तुं, भौमं रसं वा हर्तुं, गीयन्ते स्तूयन्ते स्वाभिमतसाधनाद् यजमानैरश्वपालैश्च। "यत्र गावो भूरिशृङ्गा

* अन्वेषमाणश्चा—"खेदा"—इत्यस्य रश्मिपर्यायत्वे "खेदयः"—इति कथं पठितम्? निगमदृश्ययथापाठावलम्बनमेव हृदयश्चेत् "खेदया"—इति पाठेन भवितव्यम्। अधिकमाश्चर्यमेतत्—यट्टीकाकारेण 'खेदय.'—इति प्रतीकमवलम्ब्यैव 'खेदा'—इति व्याख्याय 'खेदया'—इत्युदाहृत्य च निरस्तमिति। ऋक्संहितायामपरावपि द्वौ निगमौ,—'अर्‍॒ए इ॑व खेदया (६, ५, २८, ३)—इति, 'खेदामहस्‍॒ता इंचस्व (८, ६, २०, ४)'—इति च। १०, १०, ४, ४ परं 'खेदयः'—इत्येवं पदं न दृश्यते क्वापि।

† 'ळ्हकारस्तमिति स एव चास्य ढकारः सम्भूषणा सम्प्युक्तः'—इति प्रातिशाख्यम्।

‡ पु० १, १। ७ सू० १ प०।

थयार्थः (ऋ० सं० २, २, २४, ६)"—"को अद्य युङ्क्ते धुरिगा ऋतस्य (१, ६, ८, १)"—इति आदित्यरश्मेर्निगमौ। अश्वरश्मेरन्वेषणीयः॥

(४) रश्मयः * 'रशियमनार्थोधातुः (सौ०)'। 'नियोमिः (उ० ४, ४३)'-इति विधीयमानो मि-प्रत्ययो बाहुलकाद् भवति। रशना रश्मिरिति कतिपयप्रयोगविषयएवायं रशिः, भरत्यादिवत्, न सर्वत्र, बन्धनप्रतीतेः। बध्नन्त्युदकमथवा बध्यते तैरुदकमश्वोवा। यद्वा; 'अशू व्याप्तौ (स्वा० आ०)'। 'अशेरश्च (उ० ४, ४६ †)'—इति मि-प्रत्ययोरश्चादेशश्च। अश्नुवते सर्वं जगत् अश्वग्रीवादि वा रश्मयः। "सूर्यस्येव रश्मयो द्रावयित्नवो (ऋ० सं० ७, २, २२, १)"—"विरश्मयोजनाए अनु (ऋ० सं० १, ४, ७, ३)"—इति आदित्यरश्मेर्निगमौ। "मनः पश्चादनु यच्छन्ति रश्मयः (ऋ० सं० ५, १, २०, १)"—"ते रश्मिभिस्तात्कर्मभिः सुखादयः (ऋ० सं० १, ६, १२, ६)"—इति चाश्वरश्मेः॥

(५) अभीशवः ‡। अभिपूर्वात् 'अशू व्याप्तौ (स्वा० आ०)'—इत्यस्मात् 'भृमृशीतृचरित्सरितनिधनिमिमस्जिभ्यउ. (उ० १, ७)'—इति उ-प्रत्ययो बाहुलकाद् भवति धात्ववयवस्याकारस्येकारश्च। जस्। अभि व्याप्नुवन्ति जगदश्वग्रीवां वा। यद्वा; अभिपूर्वात् 'ईश ऐश्वर्ये (अदा० आ०)'—इत्यस्मात् पूर्ववदु-

* निरु० २. १५।    † 'अशेरिश्च'—इति सि० कौ० पाठः।

‡ प० २, ५, १ १, ११ निरु० १ ८ ८, १५।

प्रत्ययः। ईष्टे सुर्यस्तामोऽपहन्तुमेभिः, अश्वपालोऽश्वं वहुम्। "अभीशूनां महिमानं पनायत (ऋ० सं० ५, १, २०, १)"—इत्यश्वरश्मेर्निगमः। आदित्यरश्मेरन्वेषणीयः॥

(६) दीधितयः *। एतदादीन्यादित्यरश्मिनामान्येव। 'दीधिङ् दीप्तिदेवनयोः (अदा० आ०)'। 'क्तिच्क्तौ च सञ्ज्ञायाम् (३, ३, १७४)'—इति क्तिचि पृषोदरादित्वादेव (६, ३, १०९) यथाकथञ्चिद्रूपसिद्धिरुन्नेया। धीयन्ते विधीयन्ते प्रेर्यन्ते रसाहरणादिकर्मस्वादित्येन, धार्यन्ते वा वर्षार्थमुदकमेभिरादित्येन तथा। 'अथास्य कर्मरसादानं रश्मिभिश्च रसधारणम् (५, १०)'—इति निरुक्तम्। 'न वा म ध्रुतं गर्भं भास्करस्य गभस्तिभिः। पीत्वा रसं समुद्राणां द्यौः प्रसूते रसायनम्'—इति श्रीरामायणम्। "शुचोदयन्दीधितिमुक्थशासः (ऋ० सं० ३, ४, १९, १)"—इति निगमः। 'दीधितिं रश्मिमित्यर्थः'—इति (१९,६९) वाजसनेयभाष्यकृदुवटोऽभापयत्॥

(७) गभस्तयः†। गो-शब्दपूर्वादन्तर्णीतण्यर्थात् 'भस भर्त्सन-दीप्त्योः (जु० प०)'—इत्यस्मात् पूर्ववत् क्तिचोऽभावे च पृषोदरादित्वात् गो-शब्दस्याकारान्तादेशः। गां भूमिञ्च भासयन्ति दीपयन्ति। यद्वा; गवि संसर्गे दीप्यते। यद्वा; बभस्तिरत्ति-कर्मा (निघ० २, ८०)। गामुदकं भौमरसमन्तर्वर्णं बभसति अदन्ति। यद्वा; 'भसेर्गट् च'—इति भोज-सूत्रेण ति-प्रत्ययः धातोर्गडागमश्च, बभसति दीप्यन्ते इति गभस्तयः। 'गृह्णे-

* प० १, ५। निरु० २, १०।   † प० १, ५. ६।

गभस्तिः'—इति माधवः, तदा पूर्वसूत्रेण ति-प्रत्यये धातोरसुगागमः, 'हृग्रहोर्भश्छन्दसि (सि० कौ० वै० ३ पा०)'—इति निर्वाहः, गृह्णन्ति भौमं रसं। "गभस्तिपूतो नृभिरद्रिभिः सुतो (ऋ० स० ७, ३, १८, ४)"—"हस्तौ पृणस्यां गभस्तिपूतः (य० वा० स० ७, १)"—इति च निगमौ ॥

(८) वनम् *। 'वन षण सम्भक्तौ' भ्वादिः परस्मैपदी। 'पुंसि सञ्ज्ञायां घः (३, ३, ११८)'। वन्यते सेव्यते शीतादिनिवारणाय। अथ वा वनतिर्हिंसार्थः (भू० प०)। वन्यते हिंस्यतेऽनेन तमः। यद्वा; 'वनु याचने' तनादिरात्मनेभाषा। वन्यते याच्यते वृष्टिप्रदानाय। यद्वा; 'वन शब्दे' भ्वादिः परस्मैपदी। वन्यते शब्द्यते स्तूयते स्तोतृभिः। "अबुध्ने राजा वरुणो वनस्य (ऋ० सं० १, २, १४, २)"—इति निगमः। 'वननीयस्य तेजस.' —इति माधवः ॥

(९) उस्राः †। 'वस निवासे (भू० प०)'। 'स्फायितञ्चिवञ्चि (उ० २, १२)'—इत्यादिना रक्, यदादित्वात् सम्प्रसारणं बाहुलकात्, 'शासिवसिघसीनाञ्च (८, ३, ६०)'—इति षत्वाभावः। वसत्येषु परतेजः वसन्त्येषु रसाः इति वा। यद्वा; उत्पूर्वात् 'स्रु गतौ (भू० प०)'—इत्यस्मात् 'उपसर्गे च सञ्ज्ञायाम् (३, २, ९९)'—इति जनेर्विधीयमानो ड-प्रत्ययो बाहुलकाद् भवति, उदोऽन्त्यलोपश्च। उत्स्रवन्ति एभ्यो रसाः। "उस्रा इव स्वसराणि (ऋ० सं० १, १, ६, २)"—इति निगमः ॥

---

* प० १, १२। निरु० ११. ८, १। † प० १, ११। निरु० ३ १२ ६, ११।

(१०) वसवः *। 'वस निवासे (भू० प०)', 'वस आच्छादने (अदा० आ०)'। 'शृस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च (उ० १, १०)'—इति उ-प्रत्ययः। वसन्ति लोकेषु, वसन्त्यत्र रसाः, वसत्यत्र परं तेजः, आच्छादयति वा लोकान् वृष्ट्या, विवासयति वा तमः। 'बहुलमन्यत्रापि सञ्ज्ञाच्छन्दसोः (६, ४, ५१ वा०)'—इति णि-लुक्। वासयितारो वा लोकानां वृष्ट्यादिप्रदानेन। "त्र्या अत्र वसवो रन्त देवाः (ऋ० सं० ५, ४, ६, ३)"–"सुगावो देवाः सदना अकर्म य आजग्मुः सवनमिदं जुषाणाः। जक्षिवांसः पपिवांसश्च विश्वेऽस्मे धत्त वसवो वसूनि (य० वा० सं० ८, १८ †)',–"हिङ्कृण्वती वसुपत्नी वसूनाम् (ऋ० सं० २, ३, १८, २)"—इति च निगमाः॥

(११) मरीचिपाः। 'मृङ् प्राणत्यागे (तु० आ०)'। 'मृकणिभ्यामीचिः (उ० ४, ७०)'—इति ईचिः प्रत्ययः। म्रियते तमोऽस्मिन्निति मरीचिः रश्मिः। अत्र मरीचिशब्देन मरीचिमान् सूर्य उच्यते, मत्वर्थीयस्य लुक् साहचर्याद् भाव्यते, मरीचिमत्सूर्यमण्डलं पान्ति मरीचिपाः, 'आतोऽनुपसर्गे कः (३, २, ३)'। "देवेभ्यस्त्वा मरीचिपेभ्यः (य० वा० सं० ७, ३)"—इति निगमः॥

(१२) मयूखाः। 'डु मिञ् प्रक्षेपणे (स्वा० उ०)'। अस्मात् 'मुहेः खो डयूट् च (उ० ४, २२ ‡)'-इति विधीयमानः ख-

---

* प० १, ७ ९, १०. ३, ६। निरु० ३, १९ ८, ४२. १२, ४१।

† शाखान्तरपाठोऽयम्।

‡ 'माङ्यूखोमय च। उ० ४, २१'—इत्येतत् इह क्षिप्।

प्रत्ययो बाहुलकाद् भवति ; उयूडागमश्च प्रत्ययस्य बाहुलकादेव । भिन्दन्ति तमः मयूखाः । ख-प्रत्ययाधिकारे 'मयेरूट् च'-इति श्रीभोजदेवः । मयतिर्गत्यर्थः ( भू० आ० ) । गच्छन्ति सर्वलोकेषु मयूखाः । "दाधर्थ पृथिवी मभितो मयूखैः ( ऋ० सं० ५, ६, २४, ३ )"—"इमे मयूखा उपसेदुरु सदः ( ऋ० सं० ८, ७, १८, २)"—इति च निगमौ ॥

(१३) सप्तऋषयः *। 'सप्त सृप्ता सङ्ख्या (निरु० ४, २६)'—इत्युक्तेः सृपेर्गत्यर्थात् 'सप्यशूभ्यां तुट् च ( उ० १, १५५ )'—इति सपेर्विधीयमानः कनिन् प्रत्ययस्तुडागमश्च बाहुलकाद् भवति ऋकारस्याकारश्च । षड्भ्य. मकाशात् सृप्ता सङ्ख्या सप्त । 'ऋष गतौ ( तु० प० )' अनेकार्थत्वाद्धातूना दर्शनार्थः । 'इगुपधात् ( उ० ४, ११६ )'—इति इन् प्रत्यय । ऋषयः द्रष्टारः । सप्तसङ्ख्याकाश्च ते ऋषयो द्रष्टारश्च त्रैलोक्यस्येति सप्तऋषयः । 'ऋत्यकः ( ६, १, १२८ )'—इति प्रकृतिभावः । "सप्त युञ्जन्ति रथमेकचक्रम् ( ऋ० सं० २, ३, १४, २ )"—इत्यत्र 'सप्त आदित्यरश्मयः ( ४, २६ )'-इति वदन्ति नैरुक्ताः । यद्वा ; 'षप समवाये (भू० प० )', 'सप्यशूभ्यां तुट् च ( उ० १, १५५ )'—इति कनिन् प्रत्ययस्तुडागमश्च । समवेताः सप्त ; ऋषिरपिगत्यर्थएव प्रत्यय. । समवेता गच्छन्ति दिङ्मुखानि सप्तर्षय. । "यत्रा सप्त ऋषीन् पर एकमाहुः ( ऋ० सं० ८, ३, १७, २ )"—सप्त ऋषयः प्रति-

* प० ५, ८ । निरु० ४, २६. १०, २६ , २८ ।

ष्ठिताः शरीरे ( य० वा० सं० ३४, ५५ )"—"अत्रासत ऋषयः सप्त साकम् ( अथ० सं० १०, २६, ८ )"—इति निगमाः ॥

(१४) साध्याः *। 'राध साध संसिद्धौ (स्वा० दि० प०)। 'ऋहलोर्ण्यत् ( ३, १, १२४ )'-इति ण्यत् प्रत्ययः, 'कृत्यल्युटो बहुलम् ( ३, ४, ११३ )'—इति कर्त्तरि भवति। 'रसाहरणादिकं स्वव्यापारं साध्नुवन्ति संसिद्धं कुर्वन्ति'—इति स्कन्दस्वामी। 'साध्यन्ते आराध्यन्ते साध्या'—इति क्षीरस्वामी; अत्र यथाप्राप्तोण्यत्। "यत्र पूर्वे साध्याः सन्ति देवाः ( ऋ० सं० २, ३, २३, ४ )"—इति निगमः ॥

(१५) सुपर्णाः †। सूपसृष्टात् 'पॄ पालनपूरणयोः ( जु० क्र्या० प्वा० प० )'—इत्यस्मात् 'धापॄवस्यज्यतिभ्यो नः ( उ० ३, ६ )'—इति न-प्रत्ययः। 'पर्णं पततेः पृणातेः प्रीणातेः वा'—इत्यष्टाष्टकपञ्चाध्यायदृष्टत्वात् पत्-धातोः बाहुलकात् न-प्रत्ययः तकारस्य रेफादेशश्च। प्रीणातेरीकारस्य अकारादेशः स च पकारात् परः। शोभनं पृणन्ति पालयन्ति जगत् शीतादिनिवारणात्; अथवा पूरयन्ति वा वृष्ट्या; शोभनं पतनं गमन मेषामिति वा; सुष्ठु प्रीणन्ति तर्पयन्ति जगत् वर्षप्रदानेनेति वा सुपर्णः। यद्वा; सुर्मलर्णः, भावे च न प्रत्ययः। पतनादिमन्तः सुपर्णाः। तथाच—'बृहद्वदेम विदथे सुवीराः ( ऋ० सं०

* प० ५, ६। निघ० १२, ४०।

† प० ११. १४. ३, ४। निघ० १, ११. ४, २. ७, २४. ७, ३१. ८ १८. १०, ३५।

१, ६, ६, ६)'—इत्यत्र 'वीरवन्तः कल्याणवीरा वा (निरु० १,७)'। अष्टादशाध्याये च 'सुपर्णं विप्राः ( ऋ० सं० ८, ६, १६, ५ )—इत्यत्र 'पर्णवन्तं कल्याणपर्णं वा'—इति चेति सुमत्वर्थे बहुशो-दृष्टः। "यत्रा सुपर्णा अमृतस्य भागम् ( ऋ० सं० २, ३, १८, १ )"–"वयः सुपर्णा उप सेदुरिन्द्रम् (ऋ० सं० ८, ३, ४, ६ )"—इति च निगमौ॥ रश्मिना प्रायो बहुवचनान्तत्वेन दृष्टत्वात् रश्मिनामाभिप्रायेण बहुवचनान्तानि पठितानि। एवं दिङ्नामस्वपि(६) द्रष्टव्यम्॥

इति पञ्चदश रश्मिनामानि॥ ५॥

आताः(१)। आशाः(२)। उपराः(३)। आष्ठाः(४)। काष्ठाः(५)। व्योम(६)। ककुभः(७)। हरितः(८)। इत्यष्टौ दिङ्नामानि *॥ ६॥

(१) आताः। आङ्पूर्वादततेर्गतिकर्मणो (भू० प०) 'अकर्तरि च कारके (३, ३, १८)'—इति घञ्। आभिमुख्येन गम्यन्ते प्राणिभिस्तं तं कार्यं प्रति। यद्वा; आङ्पूर्वात् तनोतेः 'उपसर्गे च सञ्ज्ञायाम् ( ३, २, ९९ )'—इति जनेर्विधीयमानो ड-प्रत्ययो बहुलवचनाद् भवति। आतता: आताः। "ऋक्षस्याताः सुसमृष्टासो ( ऋ० सं० ३, ३, ७, ६ )"–"उदातैर्जिहते बृहद्द्वारो ( ऋ० सं० ६, ७, २४, ५ )"—इति निगमौ॥

---

(५) "काष्ठा"— ।                    * "इति दिशाम्" ग।

(२) आशाः *। आङ्पूर्वात् 'शदॢ शातने ( भू० प० )' —इत्ययमत्र गत्यर्थः, अनेकार्थत्वाद्धातूनाम्। पूर्ववड्डः। तं तमर्थं प्रत्यागमनात्। यद्वा; आ इत्येषोऽभीत्स्यार्थे वर्त्तते। 'अशू व्याप्तौ ( स्वा० आ० )'—इत्यस्मात् घञि रूपम्। आशा उपदिशा भवन्त्यभ्यशनात् परस्परादिभिः संव्याप्तेः। 'आ अश्नुवते आशाः'—इति क्षीरस्वामी। अत्र पचाद्यच् (३, १, १३४)। "इन्द्र आशाभ्यस्परि (ऋ० सं० २, ८, ९, २)" —इति निगमः॥

(३) उपराः †। उपरमन्ते आस्वप्राणि प्राणिनो वा स्व-स्व व्यापारेभ्यः। पूर्ववत् डः। "उपह्वरे यदुपरा अपिन्वन् ( ऋ० सं० १, ५, २, १)"—इति निगमः। "तमस्य पृक्षमुपरासु धीमहि (ऋ० सं० २, १, १२, ५ )"—इत्यत्र दिग्वाची न वेति चिन्त्यम्॥

(४) आष्ठाः। आङ्पूर्वात् तिष्ठते ( भू० प० ) धातोर्घञर्थे कविधानम्। 'स्थास्नापाव्यधिहनियुध्यर्थम् ( ३, ३, १८ वा० भा०)'—इति क-प्रत्ययः। सुषामादित्वात् (८, ३, ९८) षत्वम्। आ समन्तात् स्थीयते आभिः। निगमोऽन्वेषणीयः॥

(५) काष्ठाः ‡। 'काष्ठा दिशो भवन्ति (निरु० २, १५)'—इत्यत्र स्कन्दस्वामी—'क्रान्त्वा सर्वमतोत्य स्थिताः आकाशवद् व्यतिरेकपक्षे। अव्यतिरेकेऽपि तएव शब्दादयः सर्वत्र सन्ति संस्थिताश्चेति। उपदिशोऽप्येवमेव। व्यतिरेकेऽपि इतरेतरापेक्षया

* प० ४, २। निरु० ६, १। † प० १०। निरु० २, २२।
‡ निरु० १, ६. २, १५. ९, २३।

परत्वापरत्ववत् सर्वत्र व्यवहारोऽस्तित्वमिति'। क्रान्त्वा-शब्दात् पूर्वादिं स्थिता शब्दादुत्तरादिमित्यर्थः। पृषोदरादिः। वैयाकरणपक्षे तु 'काशृ दीप्तौ ( भू० आ० )'। 'हनिकुषिनीरमिकाशिभ्यः क्थन् ( उ० २, २ )'—इति क्थन् प्रत्ययः। 'तितुत्रतथसिसुसरकसेषु च (७, २, ९)'—इति इड़भावः। काशन्ते दीप्यन्ते काष्ठाः। "नरस्त्वां काष्ठास्ववतः ( ऋ० सं० ४, ७, २७, १ )" —इति निगमः॥

(६) व्योम *। व्याख्यातमन्तरिक्षनामसु(३)। स एवार्थोऽत्रापि। परिवीता वायुना। 'पवमानो हरित आ विवेश ( ऋ० सं० ६, ७, ८, ४ )'—इति श्रुति.। यद्वा; विविधमोममस्मिन् विद्यतइति व्योम। 'ओमानमापो मानुषीरमृक्तम् ( ऋ० सं० ४, ८, ९, २ )'—इत्यत्र 'अन्नेर्वा ओमन्'—इति माधवः। निगमोऽन्वेषणीयः॥

(७) ककुभः †। 'ककुम्भाति विस्तारयतीति ककुप्'—इति क्षीरस्वामी। 'ककुप् कुभेरुच्छ्रयार्थात् उच्छ्रिता इव हि दिशो वृक्षाग्रेषूपलभ्यमानाः'—इति माधवः। केन प्रजापतिना विस्तारिता इति वा। सर्वत्र 'क्विब्वचिप्रच्छ्यायतस्तु ( ३, २, १७८ वा० )'-इत्यत्र 'प्राक् गत्ययनिर्देशादिष्टसिद्धिः (म० भा०)' —इत्युक्तेः क्विपि पृषोदरादित्वाच्च रूपसिद्धिः। "य' ककुभो निधारयं ( ऋ० सं० ६, ३, २६, ४ )"—इति निगमः॥

---

* पु० १, १। १८ पृ० १० प०।

† निरु० ७, १२।

(८) हरितः * 'हृञ् हरणे' भ्वादिः ( उ० ), 'हृ प्रसह्यकरणे' जुहोत्यादिः (प०)। 'हृश्यारुहिपुषिभ्यः (हृश्याभ्यामितन्। उ० ३, ९० )'—इति हरितः। हरन्ति जङ्कति वा आसु स्थिताश्चौरादयो धनादिकम्। 'हरन्त्याभिः'—इति चीरस्वामी। पवमानो हरित आविवेश ( ऋ० सं० ६, ७, ८, ४ )"—इति निगमः॥ 'वायुरेव पवमानो दिशो हरित आविष्टे'—इत्युपनिषत् ( ऐ० आ० २, १ )॥

इत्यष्टौ दिङ्नामानि॥ ६॥

श्यावी[१]। क्षपा[२]। शर्वरी[३]। अक्तुः[४]। ऊर्म्या[५]। राम्या[६]। यम्या[७]। नम्या[८]। दोषा[९]। नक्ता[१०]। तमः[११]। रजः[१२]। असिक्नी[१३]। पयस्वती[१४]। तमस्वती[१५]। घृताची[१६]। शिरिणा[१७]। मोकी[१८]। शोकी[१९]। ऊधः[२०]। पयः[२१]। हिमा[२२]। वस्वी[२३]। इति त्रयोविंशती रात्रिनामानि †॥ ७॥

---

* प० १२. १५. २, ३। निरु० ४, ११।

(६) "रम्या" C. D. F. ग, ङ। घ-पुस्तके नष्टः।

(१३) "असिक्नि" (१४) "पयस्वति" (१५) "तमस्वति" } ख।

(१६) "घृताची" ख।

(१७) "शोषा" C. D. F. ग, ङ।

(१८) "मोकि" (१९) "शोकि" (२०) "उधा" (२२) "हिम" } ख।

(२३) "वस्विति" ग. ङ पु० ३। "वस्वेति" ग. C. D. F.। "वसौ"—इति रोथ्-हट्टाचट्टरयोः देवराजधृतपुस्तकयोः पाठः।

† "इति रात्रेः" ग।

(१) श्यावी *। 'श्यैङ् गतौ (भ्वा० आ०)'। 'इण्शीभ्यां वन् (उ० १, १५०)'—इति विधीयमानो वन्प्रत्ययो बाहुलकात् भवति। श्यायते गच्छति स्वाश्रयमिति। श्यावो धूसरारुणो वर्णः; तमः सन्ध्यादिवत्त्वात् श्याववर्णा रात्रिः श्यावी, 'अन्यतो ङीष् (४, १, ४०)'। "श्यावी च यदरुषी च स्वसारौ (ऋ० सं० ३, ३, ३०, १)—इति निगमः॥

(२) क्षपा। 'क्षप्यते सूर्यचारेण क्षपा'—इति क्षीरस्वामी। 'क्षप् प्रेरणे', 'क्षपि क्षान्त्याम्'-इति कथादिषु पठितोऽपि बहुलमेतन्निदर्शनमित्यस्योदाहरणत्वेन धातुवृत्तौ पठ्यते। 'क्षपेः क्षपयन्ति क्षान्त्यां प्रेरणे क्षपयेत्'-इति दैवम्। 'क्षपः क्षपयतेर्निशा'—इति च माधवः। क्षपा-शब्दोऽन्तोदात्तो रात्रिनाम, आद्युदात्तस्तु क्षपणवचनः। "नृणां नर्यो नृतमः क्षपावान् (ऋ० सं० ७, ७, २२, १)"—इति निगमः। "त्वमिदसि क्षपावान् (ऋ० सं ६, ५, ११, २)"—इति क्षपणवचनः॥

(३) शर्वरी। 'शॄ हिंसायाम् (क्र्या० प०)'। 'कॄगॄशॄवृञ्चतिभ्यः ष्वरच् (उ० २, ११४)'। टित्त्वात् (४, १, १५) ङीप्। शृणाति चेष्टाम्, रात्रौ हि स्व-स्व-व्यापारेभ्यः उपरमन्ते प्राणिनः; शीर्यन्ते वास्यां प्राणिनो नक्तञ्चरैः। "अति ष्कन्दन्ति शर्वरीः (ऋ० सं० ४, ३, ८, ३)"—इति निगमः॥

(४) अक्तुः †। 'अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु (रु० प०)'। 'पः कित्च (उ० १, ६८)'—इति विधीयमानः तु-प्रत्ययः कित्त्वञ्च

* प० १५।   † निरु० ५, २८; १२, २१।

बाहुलकाद् भवति। 'पाञ्जनूभ्यः क्तुः'—इति क्तुरिति श्रीभोज-देवः। 'अनिदिताम् ( ६, ४, २४ )' इति न-लोपः। अज्यते सिच्यतेऽस्यामवश्यायेन जगत्, गच्छति वा प्रतिदिनम् अक्तुः। "वियामक्तोरुषसः पूर्वहूतौ ( ऋ० सं० ५, ४, ६, २ )"—इति निगमः॥

(५) ऊर्म्या। 'ऊर्णुञ् आच्छादने (अदा० उ०)'। 'ऊर्णोते-र्णलोपश्च ( उ० १, २८ ? )'—इति मि-प्रत्ययः' इति इति केचित्। 'अर्त्तेरूच ( उ० ४, ४४ )'—इति मि-प्रत्ययः'—इति कमलनयनः। ऊर्मिः तमः-सङ्घातः, आच्छादकत्वात् लोकस्य। तमर्हति ( ५, १, ६३ )', 'छन्दसि च ( ५, १, ६७ )'—इति यत् प्रत्ययः। "इन्द्राय नक्तमूर्म्याः सुवाचः (ऋ० सं० ६, ६, ३२, १)"—इति निगमः॥

(६) राम्या। 'रमु क्रीड़ायाम् (भू० आ०)'। अन्तर्णीतण्य-र्थात् प्रेपार्थविशिष्टादस्मात् 'कृत्यल्युटो बहुलम् (३, ३, ११३)'—इति बहुलवचनात् 'पोरदुपधात् (३, १, ९८)' इति यतं बाधित्वा 'ऋहलोर्ण्यत् (३, १, १२४)' भवति, 'अचोञ्णिति (७, २, ११५)'—इति वृद्धिः। प्ररमयति भूतानि नक्तचराणि, उपरमयति दिवाचराणि स्वव्यापारेभ्यः। माधवस्तु सर्वभूतानि रमयति तथाच कौपीतकिः—'ये वै के चानन्दा यत्ने यानि मिथुनै रावत्रा एव ते सन्तता अवच्छिन्नाः क्रियन्ते, तेषां रात्रिः कारोतरः'—इति। 'अघोरामः सावित्रः (य० वा० सं० २८, ५८)'—इत्यत्र 'श्वेतः कृष्णोदरः'—इति भाष्यम्। 'रामयारी सितेऽसिते'—इति

वैजयन्तौ। तस्माद्रामशब्दः कृष्णपर्यायः *। स्वाश्रये रमते रामः 'ज्वलिति कसन्तेभ्यो णः (३, १, १४०)। 'तदर्हति (५, १, ६३)', 'छन्दसि च (५, १, ६७)'—इति यत्। 'अहश्च कृष्णमहरर्जुनं च (ऋ० सं० ४, ५, ११, १)'—इति श्रुतिः * * *। यद्वा; रमणं रामः। भावे घञ् (३, ३, १८)। स्त्रीभिः सह क्रीड़ा रामः। 'तत्र साधुः (४, ४, ९८)'—इति यत्। "सद्धान उपसो राम्या अनु (ऋ० सं० २, ५, २१,३)"—इति, "आविर्वेनर अकृणोद्राम्याणाम् (ऋ० सं० ३,२,१५, ३)"—इति च निगमौ॥

(७) यम्या। 'यम उपरमे (भू० प०)। 'अघ्न्यादयश्च (उ० ४, १०८)'—इति यक्-प्रत्ययान्तो निपात्यते। उपरमयति प्राणिनां चेष्टाः। अथवा 'गदमदचरयमश्चानुपसर्गे (३, १, १००)'—इति यत् कर्त्तरि बाहुलकेन। यद्वा; यमनीया उपरमयितव्या आदित्यचारेणेति यथाप्राप्तो यत् निगमोऽन्वेषणीयः †॥

(८) नम्या। (९) दोषा। (१०) नक्ता। (११) तमः। (१२) रजः। (१३) असिक्नी ‡॥

---

* अतएव "रामसेस्थात् (ऋ० सं० ७, ३, ११, २)'—इति व्याख्यावसरे उक्तं सायणेन—'राम कृष्ण शार्वरं तमोऽभ्यस्थात्'—इति।

† ऋक्संहितायान्तु मन्त्रत्रये दृश्यते 'यम्या'—इति। तत्रैकत्र (१, १, १०, ११) 'यम्या यमरूपे मिथुनभूते अहश्च रात्रिश्चेत्यर्थः'—इति, अपरत्र (८, २ १,५) 'यम्या यम्ये नियमनीये युग्मभूते वा'—इति, अन्यत्र 'यम्या युगलभूते'—इति व्याख्यातवान् सायणः।

(९) निरु० ३, १६। (१०) निरु० ८, १०। (११) निरु० ९, १९।

(१२) प० १, ३० ३, १। निरु० ९, २१ १४, ८ १०, ४४ १२, ७;—१२।

(१३) निरु० ९ २६। ‡ अयमेतानि पदानि व्याख्यातानि भाष्ये दृश्यन्ते।

(१४) पयस्वती* । पयोऽस्या अस्तीति । 'अस्मायामेधास्रजो-विनिः (५, २, १२१)' । बहुलं छन्दसि (५, २, १२२)'—इत्युक्तेर्मतुपि वत्वे च 'उगितश्च (४, १, ६) – इति ङीप् । 'तसौ मत्वर्थे ( १, ४, १८ )'—इति भ-सञ्ज्ञाविधानात् रुत्वं न भवति। निगमोऽन्वेषणीयः ॥

(१५) तमस्वती । ताम्यन्त्यनेनेति (दि॰ प॰) तमोऽन्धकारं तेन तद्वती । पूर्ववत् प्रक्रिया। निगमोऽन्वेषणीयः ॥

(१६) घृताची । 'घृ क्षरणदीप्त्योः (जु॰ प॰)', 'घृ सेचने (भू॰ प॰)' । 'अञ्जिघृसिभ्यः क्तः (उ॰ ३, ८६)' । सेचयत्यनेन भूमिं पर्जन्यः, क्षरति मेघात् दीप्तं वा स्वेन तेजसा देवतात्वादिति घृतमलावण्यायलक्षणं जलम् , तदञ्चति । 'ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चाञ्च ३, २, ५९)'—इति अञ्चतेर्गत्यर्थात् (भू॰ प॰) क्विनि 'अनिदिताम् (६, ४, २४ )'—इति न-लोपे, 'अचः (६, ४, १३८ '—इत्यकारलोपे, 'चौ (६, ३, १३८)'—इति दीर्घे, 'अञ्चतेश्चोपसङ्ख्यानम् (४, १, ६ वा॰)'--इति ङीप्, घृताचीति। निगमोऽन्वेषणीयः ॥

(१७) गिरिणा । गीङः ( अदा॰ आ॰ ) अन्तर्णीतण्यर्थात् 'बहुलमन्यत्रापि ( उ॰ २, ४६ )'—इति इनच्-प्रत्यये रुडागमो धातोर्ह्रस्वश्च। गाययति प्राणिनः गिरिणा । गाययेन्निगीति माधवः । "गिरिणायां चिदक्तुनामभीभिः (ऋ॰ सं॰ २, ६, २, ३)" —इति निगमः ॥

---

* प॰ १९। निरु॰ ५, २।

(१८) मोक्षी। 'मुच्लृ मोचने (तु० उ०)'। 'इन् सर्वधातुभ्यः (उ० ४, ११४)'—इति इनि बाहुलकात् कुत्वम्। 'कृदिकारादक्तिनः (४, १, ४५ वा०)'—इति ङीष्। मुच्यत्यस्याम-वस्थायं मध्यम, मुञ्चन्ति प्राणिनः स्वस्वव्यापारात् मोक्। तदस्या-मस्तीति 'छन्दसीवनिपौ च (५, २, १२२ वा०)'—इति मत्वर्थीय ईकार-प्रत्ययः, व्यत्ययेन (२, १, ८५) छल्ड्यादिलोपः (६, १, ६८)। "अनुव्रतं सवितुर्मोक्यागात् (ऋ० सं० २, ८, २, ३)" —इति निगमः॥

(१९) शोकी। 'शुच् शोके (भू० प०)', ज्वलति-कर्मा (निघ० १, १७) वा। पूर्ववत् प्रक्रिया। शोचन्त्यस्यां विरहिणः, शोकस्तेजोऽस्या अस्तीति वा, 'अग्निना वै तेजसा रात्रिस्तेजस्वती' —इति ब्राह्मणम्। निगमोऽन्वेषणीयः॥

(२०) ऊधः *। रात्रिनाम-निर्वचनार्थप्रसिद्धं तावदुच्यते। गोरूध उद्धततरं भवति प्रसवकाले अङ्गान्तरेभ्य उच्छ्रिततरं भवति। यद्वा; उपोन्नद्धमुपरि सृष्टमूर्ध्वमिव केनचित्। तत् स्नेहं रसानुप्रदानसामान्याद् रात्रिम्यूध उच्यते। यद्वा; 'उन्दी क्लेदने (रु० प०)'। असुनि (उ० ४, १८४)', बाहुलकान्नलोपे दकारस्य धत्वे दीर्घे च रूपम्। उनत्त्यवश्यायेन भूतानि। 'उनत्त्यूधः'—इति क्षीरस्वामी। "यो अंसे अंस उत वा य ऊधनि (ऋ० सं० ४, २, ३, ३)"—"ऊधर्न नग्ना जरन्ते (ऋ० सं ५, ७, १९,१२)"

---

* निरु० ६, १९।

—इति च निगमौ। अधनीत्यत्र छान्दसत्वादनङ् ( ५, ४, १२१ ;—१४२ ) ॥

(२१) पयः *। व्याख्यातं पयस्वतीत्यत्र, मत्वर्थीयस्य लुक्। निगमोऽन्वेषणीयः ॥

(२२) हिमा। 'हन्तेर्ह्रिं च (उ० १, १४४)—इति मक्-प्रत्ययो हिरादेशश्च। हन्ति (अदा० प०) पद्मानीति हिमम्, अर्श-आदित्वादच् ( ५, २, १२७ )। "शं भानुना शं हिमा शं घृणेन ( ऋ० सं० ७, ८, १३, ४ )"—इति निगमः ॥

(२३) वस्वी। 'वस आच्छादने (अदा० आ०)'। 'शृस्वृस्निहित्रप्यसिवसि (उ० १, १०)'—इति उ-प्रत्ययः। वस्ते आच्छादयते लोकमिति अवश्यायस्तमो वा, तद्वतो वसुः। 'छन्दसीवनिपौ च ( ५, २, १२२ वा० )'—इति ईकारः, 'वृषादीनाञ्च ( ६, १, १०२ )'—इत्याद्युदात्तत्वम्। यद्वा ; प्रशस्त-वचनाद् वसुशब्दात् 'वोतोगुणवचनात् (४, १, ४४)'—इति ङीप्, सर्वभूत-रमणत्वाद्रात्र्याः प्राशस्त्यम्। निगमोऽन्वेषणीयः † ॥

इति त्रयोविंशतीरात्रिनामानि ॥ ७ ॥

---

* प० १२. २, ७। निघ० २, ६।

† एतच्च निगमोऽस्य भवितुमर्हति—'वस्वी षु ते जरित्रे'—इति (ऋ० सं० ६, ६, २, ६)। तत्र 'वस्वीषु धनवत्सस्तासु स्तुतिषु'—इति सायणीय-व्याख्या, परं 'वस्वी। सु'—इति पदपाठविरोधादुपेक्ष्यैव सा। एतत्सूत्रैविति पदमादिकं सर्वत्रैव निरुक्तः दृश्यत यदपि चोद्यम्।

विभावरी(१)। सूनरी(२)। भास्वती(३)। ओदती(४)। चित्रामघा(५)। अर्जुनी(६)। वाजिनी(७)। वाजिनीवती(८)। सुम्नावरी(९)। अहना(१०)। द्योतना(११)। श्वेत्या(१२)। अरुषी(१३)। सूनृता(१४)। सूनृतावती(१५)। सूनृतावरी(१६)। इति षोडशोषोनामानि * ॥ ८ ॥

(१) विभावरी। 'भा दीप्तौ (अदा० प०)' विपूर्वः। 'आतो-मनिन्क्वनिब्वनिपश्च (३, २, ७४)'—इति वनिप्। 'वनो र च (४, १, ७)'—इति ङीब्रेफौ। विशेषेण भाति दीप्यते आदित्य-किरणसम्बन्धात्। "आपप्रुषी विभावरि (ऋ० सं० ३, ८, ३, ६)"—इति निगमः॥

(२) सूनरी। शोभना नरा अस्यां सन्ति, मत्वर्थीय ईकारः, व्यत्ययेन इलुप्त्यादिलोपः। अथवा बहुव्रीहिः, पिप्पल्यादिराकृति-गणत्वादीकारः। नराणां प्रसन्नचित्तत्वेन धर्मादिविशिष्टतया तदानीं शोभनत्वम्। तथाच महाकविः—'पश्चिमाद् यामिनी-यामात् प्रसादमिव चेतना'—इति। यद्वा; सूनरी शोभनं नयति कालम्। 'नृ नये (क्रया० प०), सुपूर्वात् 'अच इः (उ० ४, १३४)', 'कृदिकारादक्तिनः (४, १, ४५ वा०)'—इति ङीप्। सूनरी सुधना। यद्वा; 'नृभिर्देवैः समन्विता'—इति माधवः।

---

(८) "वाजिनिवती" ख, ङ। (११) "चहनी" ख, ङ। (१४) 'सुनृत'—इति ङ।
(१५) "सूनृतावति" ख। * "इत्युषस" ग।

'अन्येषामपि दृश्यते (६, ३, १३७)'—इति दीर्घः। व्यत्ययेनाव-धारणाद्भावस्ट्यते। "ज्योतिष्कृणोति सूनरी' (ऋ० सं० ५, ६, १, १)"—इति निगमः॥

(३) भास्वती *। 'भासृ दीप्तौ (भू० आ०)', क्विप्। भासत-इति भासः प्रकाशः। भासा, तद्वती भास्वती 'तसौ मत्वर्थे (१, ४, १९)'—इति भ-सञ्ज्ञया पदकार्यं रुत्वं न भवति भा-स्वती। "भास्वती नेत्री सूनृतानाम् (ऋ० सं० १, ८, १, ४)"—इति निगमः॥

(४) ओदती। 'उन्दी क्लेदने (रु० प०)'। उन्देर्लटः शतरि 'छन्दस्युभयथा (३, ४, ११७)'—इति शतुरार्द्धधातुकत्वेन विक-रणाभावः, सार्वधातुकत्वात् 'सार्वधातुकमपित् (१, २, ४)'-इति ङिद्वद्भावात् 'अनिदिताम् (६, ४, २४)'—इति न-लोपः, व्यत्ययेन गुणः, 'उगितश्च (४, १, ६)'—इति ङीप्। उनत्यवश्यायेन ओदती। * * *। "पदं न वेत्योदती (१, ४, ४, १)"—इति निगमः॥

(५) चित्रामघा। 'चित्र् चयने स्वा० उ०)'। 'अमिचि-मिमिदिशंसिभ्यः क्त्रः (उ० ४, १५८)'—इति क्त्र-प्रत्ययः, चित्रम्। मंहतिर्दानकर्मा (निघ० ३, २०), घञर्थे क विधानमित्यत्र परि-गणनस्योपलक्षणार्थत्वात् क-प्रत्यये 'अनिदिताम् (६, ४, २४)'—इति न लोपः, पृषोदरादित्वात् (६, ३, १०९) घत्वम्। मह्यते दीयतेऽर्थिभ्यः इति मघं धनम् चित्रमाश्चर्यभूतं धनं यस्या इति

* प० १२।

चित्रामघा, 'अन्येषामपि दृश्यते (६, ३, १३७)'—दीर्घः । "वाजिनीवती सूर्यस्य योषा चित्रामघा ( ऋ० सं० ५, ५, २२, ५ )" —इति निगम: ॥

(६) अर्जुनी *। 'अर्ज सर्ज अर्जने (चु० प०)' । अर्जेर्णिलुकि उनन्-प्रत्यय: ( उ० ३, ५५ ), अर्जयति । यद्वा ; 'अर्ज गतिस्थानार्जनेषु (भ्वा० प०)' । बाहुलकादुनन् । गम्यते तदर्थिभिः तिष्ठति स्वाश्रये । अर्जुनमिति रूपनाम ( निघ० ३, ७ ), तद्वा-चादित्यरश्मिसम्बन्धात् श्वेतम् , अर्जुनो श्वेता, 'अन्यतो ङीष् (४, १, ४०)' । यद्वा ; अर्जुन्यो गाव: ता अस्या: सन्ति वाहनत्वेन मत्वर्थीय ईकारः, व्यत्ययेन हलुद्यादिलोपः ; "या गोमतीरुषस: सर्ववीरा ( ऋ० सं० १, ८, ४, ३)"—इति श्रुति: । "द्विपच्चतुष्पदर्जुनि ( ऋ० सं० १, ४, ६, ३)"—इति निगम: ॥

(७) वाजिनी †। वाजइत्यन्ननाम (निघ० २, ७), वाजो-हविर्लक्षणमन्नमस्या अस्ति, 'अत इनिठनौ ( ५, २, ११५ )'— 'ऋन्नेभ्योङीप् ( ४, १, ५ )' । यजमानेभ्यो यानि देयान्यन्नानि तैस्तद्वती वा । "वायविन्द्रश्च चेतथ: सुतानां वाजिनीवसू ( ऋ० सं० १, १, ३, ५)"—इति निगम ॥

(८) वाजिनीवती ‡। वाजो बलं वेगो वा तेन तद्वती वाजिनी, कामी उषस. स्वभूता तेन तद्वती वाजिनीवती । यद्वा ; वाजो

* निरु० २, २१ । प० ३, ७।

† प० १, १३ ३, ६। निरु० २, २८ १, २ ७, २० १०, २८ ,—११, १२, ३३ ।

‡ निरु० १, ८ ११, २६, १२, ६।

हविर्लक्षणम् अन्नमस्या अस्तीति वाजिनी यागसन्ततिः ; तद्वती वाजिनीवती । यद्वा ; वाजमन्नं तद्वती वा वाजिनी, कार्मी अवयवभूतेनान्नेन तद्वती अन्न संहतिः, तया अन्नसंहत्या तद्वती वाजिनीवती । यद्वा ; द्वावेतौ मत्वर्थीयौ तयोरेकार्थेणातितरो-मत्वर्थीयः अतिशयेनान्नवतीत्यर्थः 'वाजिनीवतीत्विया हि सर्वेऽन्नं लभन्ते'—इति माधवः । 'सञ्ज्ञायाम् ( ८, २, ११ )'—इति वा 'छन्दसीरः ( ८, २, १५ )'—इति वा मतुपोवत्वम् । "व्यश्वेभ्यः सुभगे वाजिनीवति ऋ० सं० ६, २, २२, ३)"—"अश्वभ्यं वाजिनीवति ( ऋ० सं० ३, ८, ७, ४ )"—इति निगमौ ॥

(९) सुम्नावरी । सुपूर्वात् 'म्ना माने (अदा० प०)'—इत्यस्मात् 'उपसर्गे च सञ्ज्ञायाम् (३, २,९९)'—इति जनेर्विधीयमानो ड-प्रत्ययो बाहुलकाद् भवति । सुष्ठु आम्नायते अभ्यस्यते इति सुम्नं सुखं, तद्धि सर्वैः सर्वदा ममेदं भूयादित्यभ्यासेन प्रार्थ्यते । तथाच-'सुखं सुम्नातेः, प्रजा वै पशवः सुम्नम्'—इति माधवः । तदस्या अस्ति । 'छन्दसीवनिपौ च (५, २, १२२ वा०)'—'वनो र च '४, १, ७)'—इति ङीब्रौ, 'अन्येषामपि दृश्यते (६,३, १३७)'—इति दीर्घः । सुम्नावतीत्यर्थः । "सुम्नावरी सूनृता ईरयन्ती ( ऋ० सं० १, ८, ३, २)"—इति निगमः ॥

(१०) अहना । 'अहि गतौ', भ्वादिरात्मनेपदी ; 'अह व्याप्तौ', स्वादिः परस्मैपदी । 'युच् बहुलम् (उ० २, ७४)'—इति युच्-प्रत्ययः, बहुलवचनात् पूर्ववन्नकारलोपः । अहन्ते गच्छत्यावार्ये प्रतिदिनं स्वयं गच्छतीति वा । व्याप्नोति स्वभासा ;लोकं

व्याप्यते वादित्यरश्मिभि । "स्टहं स्टहमहना यात्यच्छा (ऋ० सं० २, १, ४, ४ )"—इति निगम ॥

(११) द्योतना । एतस्मात् 'द्युत दीप्तौ ( भू० आ० )'—इत्यस्मात् 'ण्यासश्रन्थो युच् ( ३, ३, १०७ )'—इति बाहुलकात् कर्त्तरि युच् , 'णेरनिटि (६, ४, ५१)'—इति णि-लोपः । द्योतयति सर्वान् पदार्थान् प्रकाशकत्वात् । यद्वा ; केवलाद् 'अनुदात्तेतश्च हलादेः ( ३, २, १४९ )'—इति युच् । द्योतते स्वयं द्योतना । "सिषासन्ती द्योतना शश्वदागात् ( ऋ० सं० २, १, ४, ४ )"—इति निगमः ॥

(१२) श्वेत्या *। 'श्विता वर्णे (भू० आ०)'। अघ्न्यादित्वात् (उ० ४, १०८) यक् द्रष्टव्यः । श्वेतते श्वेत्या । 'श्विता वर्णे' इति वर्णसामान्यं सामर्थ्यात् शुक्लवर्णेऽपि श्वैत्ये पर्यवसितं द्रष्टव्यम् उषसि तथा दर्शनात् । "रुशद्वत्सा रुशती श्वेत्यागात् (ऋ० सं० १, ८, १, २)"—इति निगमः ॥

(१३) ऋतरी †। 'ऋ सृ गतौ' जुहोत्यादिः (प०), 'ऋ गतिप्रापणयोः' भ्वादिः (प०)। 'ऋतनिभ्यामुषन् (उ० ४, ७४) ‡', पिप्पल्यादेराकृतिगणत्वादीकारः § । इयर्त्ति गच्छति वादित्योदयेनास्तं प्रतिदिनम् प्रापयति वा स्तोतॄन् ऐश्वर्यादि । यद्वा ; आङ्पूर्वात् 'रुच दीप्तौ ( भू० आ० )'—इत्यस्मात् बाहुल-

* निघ० २, २०।    † प० ३, ७। निघ० १२, ७।

‡ 'ऋहनिभ्यामुषन्'—इति मुद्रपाठ । एवञ्चादर्शेष्वपि पाठमाश्रित्य दृश्यते ... नाम्यम् । 'ऋर्निंश्वहि (उ० २, ११०)—इत्यनेन 'ऋतम्—इति सिध्यते सिद्धान्तादिवत् कौमि भवेन्नायम्' ति ।

§ पिप्पल्यादिषु गौरादिष्वपि ( ४, १, ४१ ), ईकार ... ।

कात् ङुपच्, टिलोपः, घाञोङ्गस्वय; आरोचते अरुषी। यद्वा; अरुषमिति रूपनाम (निघ० ३, ७), सामर्थ्यादत्र शुक्लविषयम्, शुक्लवर्णा अरुषी। 'अन्यतो ङीष् ( ४, १, ४० )'। "अञ्जेव चित्रारुषी ( ऋ० सं० ९, ८, ३, २ )"—इति च निगमः॥

(१४) सूनृता*। (१५) सूनृतावती। (१६) सूनृतावरी। सुष्ठु ऊन्यते अप्रियैरिति सून्। सुपूर्वात् 'ऊन परिहाणे (दि० आ०)'—इत्यस्मात् क्विप्। ऋतमिति सत्यनाम ( निरु० ४, १८)। सूनं तदृतञ्च सूनृतम्, पृषोदरादित्वात् (६, ३, १०९) न-लोपाभावः। प्रियञ्च सत्यञ्च। पूर्वं मत्वर्थीयोऽकारः, उत्तरत्र मतुप्, अन्यत्र 'छन्दसीवनिपौ च ( ५,२, १२२ वा० )'—इति वनिप्, मतौ वत्वरत्वौ, 'अन्येषामपि दृश्यते ( ६, ३, १३७ )'—इति दीर्घः। यद्वा; प्रियसत्यरूपा वाचः सूनृता उच्यन्ते। "सुम्नावरी सूनृता ईरयन्ती (ऋ० सं० १, ८, ३, २)"–"उदीरय प्रति मा सूनृता उषः ( ऋ० सं० १, ४, ३, २ )"—इत्यादि दर्शनात् तद्वत्यः सूनृतादयः। दीर्घो नापेक्षणीयः। यद्वा; सूनृतेत्यन्ननामसु ( निघ० २, ७ ) पाठादन्नम्। सूनृता धननाम ( ? ) माधवपक्षेण अन्नवत्यो धनवत्यो वा सूनृतादयः। "रेवत् स्तोत्रे सूनृते जारयन्ती ( ऋ० सं० २, १, ८, ५ )"—"रेवदस्मे व्युच्छ सूनृतावति (ऋ० सं० १, ६, २६, ४)"—"चिकित्वित् सूनृतावरि (ऋ० सं० ३, ८, ३, ४)"—इति च निगमाः क्रमेण॥

इति षोडशोषोनामानि॥ ८॥

---

* प० १, ० ।

वस्तोः(१)। द्यौः(२)। भानुः(३)। वासरम्(४)। स्वसराणि(५)। घ्रंसः(६)। घर्मः(७)। घृणः(८)। दिनम्(९)। दिवा(१०)। दिवेदिवे(११)। द्यविद्यवि(१२)। इति द्वादशाहर्नामानि * ॥ ९ ॥

(१) वस्तोः †। अत्र स्कन्दस्वामी—'वस्तोरितीदमपीवेदं नाम, न विभक्त्यन्तरम्, "दोषावस्तोर्हविष्मती घृताची (ऋ० सं० ५, १, २४, १)"—"दोषावस्तोर्वहीयसः प्रपित्वे (ऋ० सं० १, ७, १८, १)"—इति समस्तस्यापि दर्शनात्। वस्ते ज्योतिरिति वस्तोः, द्योतत इति द्यौः। एवं सर्वत्र'—इति। वस्ते (श्वदा० आ०) आच्छादयतीति ज्योतिः। व्यत्ययेन कर्त्तरि तोसुन् (३, ४, १३)। "कुह स्विद्दोषा कुह वस्तोरश्विना (ऋ० सं० ७, ८, १८, २)"—इति निगमः। कुह क्वेति सप्तमीसामानाधिकरण्यात् दोषावस्तोरित्यपि सप्तम्या एवाव्ययलुगध्यवसितः॥

(२) द्यौः ‡। 'द्युत दीप्तौ (भ्वा० आ०)', बाहुलकात् डोप्रत्ययः (उ० २, ६४)। द्योतते किरणसम्बन्धात्। यद्वा; 'द्यु

---

(२) "द्यु"—कारितिरूपेषु सर्वत्रैवमेव टीकाकृता समाधानेन स्वीकृतम्।

(८) "घृणि" C D F. ग, क। प० १७ १, ११।

(१२) "द्यविद्यवि"—इति क।

* "द्वादश" ग।

† निरु० ३, १५ ८, ९।

‡ निरु० १ ६ ३, १०, ६ १ ९, ११ १०, २२,—२०।

अभिगमने (भ्वदा० प०)' ; 'द्युगमिभ्यां डोः'—इति श्रीभोजदेवः। अभिगच्छन्त्यस्मिन् स्वं स्वमभिमतप्रदेशं प्राणिनः। 'गोतोणित् (७, १, ९०)'—इति वृद्धिः। "मर्ध्य आरोधने दिवः (१, ७, ३२, १)"—इति निगमः॥ केचित् द्युरिति पठन्ति। तदा 'डिव' —इत्यधिकारे 'द्युद्रुभ्यां च'—इति भोजसूत्रेण उ-प्रत्ययः। 'द्यु अभिगमने ( भ्वदा० प० )' द्युतेरेव वा 'भय्वादयश्च (उ० ५, ३०)' —इति डुन्-प्रत्ययान्तौ निपातितौ द्रष्टव्यः। उभयत्र पूर्वोक्त एवार्थः। "द्युभिरक्तुभिः परिपातमस्मान् (ऋ० सं० १, ७, २७, ५)"—"त्वमग्ने द्युभिः त्वमाशुशुक्षणिः (ऋ० सं० २, ५, १७, १)" —इति निगमौ॥

(३) भानुः। 'भा दीप्तौ (भ्वदा० प०)' ; 'भादाभ्यां नुः (उ० ३, ३१)। भात्यादित्याधिकरणसम्बन्धादेव। "उद्देया उषसो भानुरर्त्त ( ऋ० सं० ३, ४, १५, २ )"—इति निगमः। रश्मि-र्भानुरिति माधवोक्तमहर्भवितुमर्हति॥

(४) वासरम् *। 'वस निवासे ( भ्वा० प० )' ; णिजन्तः शब्दोऽपि वि-पूर्वस्यार्थे वर्त्तते। 'अर्त्तिकमिभ्रमिदिविचमिवासिभ्यश्चित् (उ० ३, १२८)'—इत्यरच् प्रत्ययः। विवासयति अपनयति शीतादिकम्। यद्वा ; वसेः स्वार्थे णिचि अधिकरणेऽरच्। वसत्यस्मिन् सुखेनेति वासरम्। यद्वा ; 'वाशृ दीप्तौ (दि०आ०)' ; पूर्वस्मादेव सूत्रादरच् दीप्यते वासरम्। यद्वा ; विपूर्वात् सर्त्तेर्गत्यर्थात् पचाद्यचि वीत्यस्येकारस्याकारः पृषोदरादित्वात्; द्विविधं

* निरु० ४, ७।

सराणि सृतानि विस्तीर्णानीत्यर्थः। 'वासराणि वैसराणि (निरु० ४, ७)'—इति भाष्ये स्कन्दस्वामी—'वैसरशब्दस्यायमेकारस्याकारः। सादृश्येन चात्र वर्त्तते। यथा वैसरो निष्पादकगताभ्यां विरुद्धाभ्यां जातिभ्यामश्वत्वजात्या गर्दभत्वजात्या सम्बद्ध। एवं यावत् द्वौ निष्पादकौ पूर्वभागापरभागौ तद्गताभ्यां विरुद्धाभ्यां शीतोष्णाभ्यां पूर्वभागगतेन शीतेनापरभागगतेन चोष्णेन सम्बन्धाद् वैसरसदृशत्वाद् वासरम्'—इति। "अहानीव सूर्यो वासराणि (ऋ० सं० ६, ४, १२, २)"। अहानीत्यनेन पौनरुक्त्यादन्योऽपि निगमोऽन्वेषणीयः॥

५) स्वसराणि *। स्वशब्दे उपपदे सर्त्तेर्गत्यर्थात् (भू० प०) पचाद्यच् (३, १, १३४)। स्वेन आत्मनैव गच्छन्ति। अपि च, स्वरित्यादित्यनाम (निरु० २, १४)। सर्त्तेः 'पुंसि सञ्ज्ञायां घः प्रायेण (३, ३, ११८)'। अन्तर्णीतण्यर्थश्चात्र सर्त्तिः। स्वरित्येतस्य रेफलोपः पृषोदरादित्वात् (६, ३, १०९)। आदित्येन सार्यते। स हि स्वोदयास्तमयाभ्यां तानि गमयति। यद्वा; सुपूर्वात् 'असु क्षेपणे (दि० प०)'—इत्यस्मात् कृदरादित्वादरच् (उ० ५, ४२) द्रष्टव्यः। सुष्ठु असन्ते क्षिप्यन्ते सूर्येण स्वोदयास्तमयाभ्याम्, तथाच 'स्वसरदृहेत्युपदृष्टात्'—इति माधवः। "उस्राइव स्वसराणि (ऋ० सं० १, १, ६, २)" इति निगमः॥

(६) घ्रंसः †। 'ग्रह उपादाने (क्र्या० उ०)' अस्मात् घञि पृषोदरादित्वात् (६, ३, १०९) गकारस्य घकारस्य घकारो

* प० १, ४ ४, २। निरु० ५, ४। † निरु० ६, ४;—१८,—१६।

नुगागमः हकारस्य सकारः। स्रवन्त्यस्मिन् रसा अवश्याया आदित्येन। "यो अंसौ ग्रंस उत वा य ऊर्धनि (ऋ० सं० ४, २, ३, ३)"—इति निगमः॥

(७) घर्मः *। 'घृ क्षरणदीप्त्योः (जु० प० ?)' ; 'घर्मः (उ० १, १४६ )'—इति म-प्रत्ययान्तो निपातः। जिघर्त्ति दीप्यते रश्मिसम्बन्धात्। निगमोऽन्वेषणीय:॥

(८) घृणः। जिघर्त्तेः (जु० प० ?) 'इण्सिञ्जिदीङुष्यविभ्यो नक् (उ० ३, २)'—इतीणादिभ्यो विधीयमानो नक्-प्रत्ययो बाहुलकाद् भवति। पूर्ववदर्थः। "घृणा वयोऽरुषासः परि ग्मन् ( ऋ० सं० ३, ७, १८, ६)"—इति निगमः †। * * *॥

(९) दिनम्। 'दो अवखण्डने (दि० प०)' ; पूर्ववदौणादिके नक्-प्रत्यये बाहुलकात् (उ० २, ४६) ; 'द्यतिस्यतिमास्थाम् (७, ४, ४० )'—इतीत्वम्। द्यतितमः दिनम्। "अधा सुरिभ्यः सुदिना व्युच्छान् ( ऋ० सं० ५, २, २८, १)"—इति निगमः॥

(१०) दिवा ‡। द्योतनात्। अव्ययमिदम्। "दिवा मिपित्वेऽवसा गमिष्ठा ( ऋ० सं० ४, ४, १७, २)"—"दिवा नक्तमवसा शन्तमेन ( ऋ० सं० ४, ३, १७, ६)"—इति निगमौ॥

(११) दिवेदिवे §। 'दिवु क्रीडाविजिगीषाव्यवहारद्युति-

---

* प० २, १०। निरु० ६, १९ ११, ४२, —४१।

† घृणिरिति पाठान्तरपक्षेऽप्यत्र निगमः—'घृणौ वच्छायाम्'—इति 'घृणेव छायां यथा सूर्यकिरणसन्तप्तच्छायाम्'—इति तत्रोक्तं सायणेन २, ७, १०, १।

‡ सु ३०ञ्ज'।     § निरु० ३, १८।

स्तुतिमोदमदस्वप्नकान्तिगतिषु (दि० प०)। 'दिवेर्डिविः ( ? )' — इत्यधिकरणे डिविप्रत्ययः। दिव्यन्तेऽस्मिन्निति द्यौः। दिव्-शब्दात् परस्य सप्तम्या एकवचनस्य 'सुपांसुलुक् ( ७, १, ३९ )'— इत्यादिना शे आदेशः, प्रगृह्यत्वं (१, १, १३ ) तु व्यत्ययेनाच न भवति। चतुर्थी वा व्यत्ययेन। ततो वीप्सादिः ( ८, १, ४ ), दिवसेदिवसे इत्यर्थः। यथादृष्टं पठितमिदं नाम। "उपत्वाग्ने दिवेदिवे (१, १, २, २)"—"दिवेदिवे वाममस्मभ्यं सावीः (ऋ० सं० ५, १, १५, ६)"—इति च निगमौ ॥

(१२) द्यविद्यवि। द्योशब्दो व्याख्यात (२)। सप्तम्येकवचनं, वीप्सादि पूर्ववत्, "मिनीमसि द्यविद्यवि ( ऋ० सं० १, २, १६, १)"—इति निगमः ॥

इति द्वादशाह्नर्नामानि ॥ ९ ॥

अद्रिः(१)। ग्रावा(२)। गोत्रः(३)। वलः(४)। अश्नः(५)। पुरुभोजाः(६)। वलिशानः(७)। अश्मा(८)। पर्वतः(९)। गिरिः(१०)। व्रजः(११)। चरुः(१२)। वराहः(१३)। शम्बरः(१४)। रौहिणः(१५)। रैवतः(१६)। फलिगः(१७)। उपरः(१८)।

---

(७) "बलिशान" क, ङ। "पर्शान" C. D ग अयमेव पाठो युक्ततर इति लक्ष्यते अस्यैव निगम-दर्शनात्। ऋक् सं० १ ७, ५, ४. ५, ८ २१, ४ ६, ९, ४८, ६। "पशान" F। घ पुस्तके तु क्वापि पद भूर्णम्।

(८) "अनुमा" च। बहुभिलेखकैन लिखितत्वादादर्शपाठे भ्रममूलकैषा लिपि-रित्यनुमिमे मात्राचर-लिखित 'श्मा'—इत्यस्य 'नुमा' पाठभ्रमसम्भवात्।

उपलः[१९] । चमसः[२०] । अहिः[२१] । अभ्रम्[२२]। वलाहकः[२३]। मेघः[२४] । दृतिः[२५] । ओदनः[२६] । वृषन्धिः[२७]। वृत्रः[२८]। असुरः[२९]। कोशः[३०]। इति त्रिंशन्मेघनामानि * ॥ १० ॥

'आ उपर उपल इत्येताभ्यां साधारणानि पर्वतनामभिः (निरु॰ २, २१)'—इत्युक्तेर्मेघनामत्वं पर्वतनामत्वं क्रमेण निरुच्य प्रदर्श्यते।

(१) अद्रिः † । 'अद भक्षणे (अदा॰ प॰)' । 'अदिशदिभूशुभिभ्यः क्रिन् (उ॰ ४ पा॰)'—इति क्रिन्-प्रत्ययः । अत्ति हि मेघो वर्षार्थमादित्यरश्मिभिराहृतान् भौमरसान् , अत्ति मेघैरभिसृष्टं जलम् , अद्यते वा प्राणिभिस्तत्प्रभवपदार्थभक्षणं तत्रोपचर्यते, अदन्त्यस्मिन् पदार्थान् मनुष्या इति वा । यद्वा ; नञ्पूर्वात् 'दॄ विदारणे (क्र्या॰ प॰)'—इत्यस्मात् बाहुलकात् रिन्-प्रत्ययः टिलोपश्च । अदरणीय इत्यद्रिः पर्वतः । "वि जयुषा ययथुः सान्वद्रेः (१, ८, १६, १)"—इति मेघस्य निगमः । "नास्तरिर्न नाद्रयः सोमो' अक्ताः ( ऋ॰ सं॰ ८, ४, १५, १,"—इति पर्वतस्य ॥

(२) ग्रावा: ‡ । इन्तेः (अदा॰ प॰) 'अन्येभ्योऽपि दृश्यन्ते

(२२) "अभ्वम्" ग. C. D. F । प॰ १२. १, २ ।

(२३) "बलाहकः" इत्येव कातिपय-सर्वपुस्तकेषु, पर टीकाविरोधादुपेक्षा: ।

(२५) "दति." च ।

(२६) "ओदनम्" ग. C. D. F ।

(२७) "विवधि."—इत्यपि टीकासम्मतम् । * "इति मेघानाम्" ख ।

† निरु॰ ४, ४. ९, २ । ‡ प॰ ४, १ । निरु॰ ९, ८—९ ।

( ३, २, ७५)'—इति क्वनिप्। पृषोदरादित्वात् (६, ३, १०८) धातोर्गादेशः। हन्यते हि मेघ इन्द्रेण 'अहन्नहिम् (ऋ० सं० १, २, ३६, १ )'—इति श्रूयते। हन्यतेऽनेन सोमः। यद्वा; 'गॄ निगरणे (तु० प०)', 'गॄ शब्दे ( क्रा० प० )', गृणातिस्तुतिकर्मा (निरु० ३, ५) ; एभ्यः पूर्ववत् क्वनिपि अडागमः। दृशिग्रहणात् ( ३, २, ७५ ) सर्वं सिद्धम्। गिरत्युदकं वर्षितुम्। अत्र गिरति कृत्पूर्वस्यार्थे वर्त्तते, समुद्गिरति जलं वृष्टिसमये, समुद्गीर्ण इति वा अन्तरिक्षेण, गृणाति गर्जितलक्षणं शब्दं करोति, स्तूयते वा वर्षार्थिभिरिति ग्रावा मेघः। पर्वतोऽपि इन्द्रेण हन्यते पक्षच्छेद-समये, गिरति मेघैरभिवृष्टं जलमुद्गिरति निर्भरजलम्, समुद्गीर्ण इव वा गुहादिगतसिंहादिशब्देन, शब्दकारी, स्तूयते च पदार्थ-बाहुल्यात् प्राणिभिस्तदाश्रयिभिरिति ग्रावा। "इन्द्र ग्रावाणो अदितिः सजोषाः। ( ऋ० सं० ४, १, २८, ५ )"—इति मेघस्य निगमः। "ग्रावाणो अप दुच्छुनामप सेधत ( ऋ० सं० ८, ८, २३, २)"—"ग्रावाण उपरेष्वा महीयन्ते' (ऋ० सं० ८,८,२३,३)" —इति पर्वतस्य निगमः॥

(३) गौत्वः। 'गुङ् अव्यक्ते शब्दे (भ्रू० आ०)'। 'गुधृवी-पचिवचि यमि [सनितनि*] सदिक्षदिभ्यस्तः ( उ० ४, १६२ )'—इति त्व-प्रत्ययः। मेघोगर्जितलक्षणमव्यक्ताक्षरं शब्दं करोति, गूयते शब्द्यते वा,—'अहो ! अयमतीवघर्मकाले वर्षार्थमागतः' —इति। यद्वा; गामुदकं रश्मिभिराहृतं वर्षाव्यतिरिक्तेषु त्रायते पालयति। 'आतोऽनुपसर्गे कः (३, २, ३)'। शरदादिषु हि

* नायमं पाठो दृश्यते मूले।

मेघेषु घनीभूताश्लिष्टव्याप:। गां पशुजीतिं त्रायते वा तृष्या पानीयप्रदानात्। पर्वतोऽपि निर्झरादिपतनजन्यमव्यक्तं शब्दं करोति, अभिवृष्टमुदकमुदकाधारेषु धारणाद् रक्षति च, गोत्र सुयवसवत्तया गोत्राः। "गोत्रा शिक्षन् दधीचे मातरिश्वने (ऋ० सं० ८, १, ५, २)"—"त्वं गोत्रमङ्गिरोभ्योऽवृणोरप ( ऋ० सं० १, ४, ८, ३)"—"उद्गोत्राणि ससृजे दंसनावान् ( ऋ० सं० ३, २, २५, ४)"—इति च मेघनिगमाः। "गोत्रभिदं गोविदं वज्रबाहुम् ( ऋ० सं० ८, ५, २२, ६ )"—इति पर्वतस्य॥

(४) वल: *। 'वृ आवरणे (स्वा० उ०)'। 'ग्रहवृदृनिश्चिगमश्च (३, ३, ५८)'—इत्यप्। अपि लकारादित्वात् लत्वम्। यद्वा; 'वल संवरणे (भू०आ०), अस्मात् 'पुंसि सञ्ज्ञायां घ: प्रायेण (३, ३, ११८)'—इति घ:। व्रियतेऽनेन दिश आकाशश्च मेघ: पर्वतेनापि स्वशरीरेण भूमिराकाशश्च संव्रियते। "अलातृणो वल इन्द्र व्रजो गो: (ऋ० सं० ३, २, २, ५)"—इति निगमो मेघस्य। "इन्द्रो वलं रक्षितारं दुघानाम् ( ऋ० सं० ८, २, १५, ६ )"—इति पर्वतस्य॥

(५) अश्न: †। 'अशू व्याप्तौ स्वा० आ०)', 'अश भोजने (क्रया० प०)'; आभ्याम् 'इण्सिञ्जिदीङुष्यविभ्यो नक् ( उ० ३, २)'—इति विधीयमानो नक्-प्रत्ययो बाहुलकाद् भवति, णत्वं च न भवति 'अशात् (८, ४, ४४)'—इति प्रतिषेधात्। उभावपि व्याप्नुत आकाशमग्रीतयोदकम्, एको वर्षितव्यमपरोहृष्टम्। अश्ननेन

* निरु० ६, २। † निरु० ४, १९. १०, १२।

चात्र तत्स्थत्व लक्ष्यते । "अग्रापिनद्ध मधुपर्यपश्यत् ( ऋ० स० ८, २, १८, ७)"—इति मेघस्य । निगमोऽन्वेषणीयो वा ॥

(६) पुरुभोजा । 'भुज पालनाभ्यवहारयो (रु० प०)'—इत्यस्मात् विदिभुजिभ्या विश्वे (उ० ४, २३१)'—इति विश्वशब्द उपपदे विहितोऽसु-प्रत्यय पुरुशब्देऽप्युपपदे बाहुलकाद् (२, ३, १) भवति । पुरु बहु प्राणिजात भुनक्ति पालयति वृष्टिप्रदानेन मेघ, पर्वतो हि दुर्भिक्षादेरक्षति । 'समुद्र पर्वतो राजा नव दुर्भिक्षनाशका'—इत्युक्ते । पुरु अभ्यवहरति सामर्थ्याज्जलमत्र विशेष्यम्, एको वर्षितव्यमपरो हि वृष्टमिति विशेष । बहुभि र्भुज्यते पाल्यते अभ्यवह्रियते वा । मेघस्य खिन्द्र आदित्यरश्मयश्च रक्षितार, पर्वतस्य तत्तद्देशाधिपतय । मेघ स्वद्रव्युदकद्वारेण अभ्यवह्रियते । द्वयोरपि निगमावन्वेषणीयौ * ॥

(७) वलिशान । बल सवरणे (भू० आ० ),-औणादिक क्विप् । ईश ऐश्वर्ये अदादिक (आ०) । लट शानच् । सह खव्राकाशमोष्टे वर्षितुम्, पर्वतोऽपि स्वभोगेन भूमिमाकाश सह खव्रोष्टे दुर्भिक्षादेर्मनुष्यादोन्रक्षितुम् वलीशान इति, लोकवेदनिघण्टौ दृष्टान्तात् पृषोदरादित्वात् ह्रस्व । निगमावन्वेषणीयौ † ॥

---

* एकसहित एवैव दृश्यते उभयोरपि निगमौ पर तत्र तत्र तत्र व्याख्या हभिर्नैवयोर्भूमिमुष्टिरस्थिरतति नोपलब्धा इवराजन । पुरुभोजो मघो (५ ५ २१ ८)—इति मेघस्य 'गिरिर्न पुरुभोजसम् (६ ८ ११ २)—इति पर्वतस्य ।

† "पशान"—इति (ग C. D) पाठेऽपि सायणादिभाष्येऽविश्वास तु न त्वरणप्रयास । तथा हि— यन्दशोने पर भृतम् (ऋ० म० ६ १ १८ ६)—इति मेघस्य निगम एव च गिरर्थश्रियिक्रियहन पशानामामन्यमन (ऋ० म० १ ८ १४ ४)—इति तु पर्वतस्य ।

(८) अश्मा *। 'अशू व्याप्तौ (स्वा० आ०)', 'अश भोजने (क्र्या० प०)'। 'अशिशकिभ्यां छन्दसि (उ० ४, १४४)'—इति मनिन्। अश्न इत्यनेन समानार्थः। "अपाद्हस्तो अपृतन्यदिन्द्रमास्य वज्रमधि सानौ जघान ..."—नहि; "अपादहणोदुरो अश्मव्रजानाम् ( ऋ० सं० ८, ७, २७, ६ )"—इति मेघस्य निगमः। "यो अश्मनोरन्तरग्निं जजान ( ऋ० सं० २, ६, ७, ३ )"—इति पर्वतस्य। अत्र स्कन्दस्वामिना मेघत्वेन व्याख्यातम्॥

(९) पर्वतः †। 'पॄ पालनपूरणयोः (क्र्या० प०)'। 'स्नामदिपद्यर्त्तिपॄशकिभ्यो वनिप् ( उ० ४, १०९ )'। पृणन्ति पालयन्ति अवयविनं पूर्यन्ते वा तेन इति पर्वाणि। यद्वा ; प्रीणातेर्बाहुलकात् (३, ३, १) वनिपि ईकारस्याकारः स च पकारात् परः प्रीणयन्ति स्वाश्रयमिति। पर्वाण्यवयवाः सन्त्यस्य 'पर्वमरुद्भ्यां तप् वक्तव्यः ( ५, २, १२१ वा )'—इति मत्वर्थीयस्तप्-प्रत्ययः। मेघस्य पर्वतस्य च देवतात्मकत्वस्य च विद्यमानत्वात् अवयविनि वक्तुं शक्यम्। यद्वा ; परिदृश्यमानाकारेणापि मेघस्य धूमादिसङ्घातत्वात्, पर्वतस्य च शिलादिमत्त्वादवयवित्वम्। यद्वा ; 'पर्व पूरणे ( भू० प० )', अस्मात् 'भृमृदृशियजिपर्विपच्यमितमिनमिहर्यिभ्योऽतच् (उ० ३, १०७)'—इत्यतच्-प्रत्ययः। पर्वति पूरयति वर्षेण भूमिं स्वशरीरेणाकाशं वा पर्वतोऽपि निर्झरनदीप्रवाहादिना भूमिस्रोतस्याकाशञ्च पूरयति। "नि पर्वता अद्मसदो न सेदुः ( ऋ० सं० ४, ७, २, ३)"—"वक्रिया पर्वतानाम् (ऋ० सं० ४, ४, २८,१)"

* निरु० ६, १. ८, २।

† निरु० १, २०. १०, ९. ११, २०।

—इति मेघस्य निगमौ । "यदंद्रय पर्वता: साकमाशव. (ऋ० सं० ८, ४, २९, १)"—"प्र पर्वतानामुशती उपस्थात् ( ऋ० सं० ३, २, १२, १)"—इति च पर्वतस्य ॥

(१०) गिरि: * । 'गॄ निगरणे (तु० प०)', अथवा 'गॄ शब्दे (क्रा० प०)', शब्दाति: स्तुतिकर्मा ( निरु० ३, ५ ) । किदिति वर्त्तमाने (उ० ४, १३७), 'कॄगॄशॄपॄकुटिभिदिछिदिभ्यश्च इ (उ०४, १३८ )'—इति इ-प्रत्यय , 'ऋतइद्धातो: (७, १, १००)'—इतीत्वम् ; गिरि: । ग्रावेत्यनेन समानार्थ: । "निराविध्यद् गिरिभृष्टिर्न भ्राजते तुजा शव' ( ऋ० सं० १, ४, २१, ३ )"—इति पर्वतस्य । "मृगो न भीम: कुचरो गिरिष्ठा: ( ऋ० स० २, २, २४, २)"—इत्युभयस्य ॥

(११) व्रज. † । 'व्रज गतौ (भू० प०)' । 'गोचरसञ्चरवहव्रजव्यजापण निगमाश्च ( ३, ३, ११९ )'—इति निपातनात् घ , करणाधिकरणयोस्तद्व्यतिरिक्ते कारकेऽपि घो भवति । व्रजत्यन्तरिक्षे व्रजत्यनेनेन्द्र इति वा व्रजोमेघ , मेघवाहनोह्मीन्द्र: पर्वतोऽपि पक्षच्छेदात् पूर्वमन्तरिक्षे व्रजति । अथवा स्वशरीरेण भूमिमन्तरिक्षञ्च व्रजति । व्रजन्ति तत्र प्राणिन इति वा । "अप व्रज सूर्णय: समास्यम् ( ऋ० स० ७, ८, १९, २ )"—इति मेघस्य निगम. । "व्रज गोमन्तमुशिजो वि वव्रु ( ऋ० सं० ३, ४, १४, ५ )"—इति पर्वतस्य ॥

(१२) चरु ‡ । 'चर गति-भक्षणयो. (भू० प०)' । 'भृमृ

* निरु० १, १० । † निरु० ६ १ । ‡ निरु० ६, ११ ।

श्रीहचरिक्षरितनिधनिमिमसृजिभ्य उः ( उ० १, ७ )'—इति उ-प्रत्ययः । चरन्ति गच्छन्त्यस्मादापो मेघादवर्षाकाले, पर्वतानां निर्झरलक्षणाः चरयन्ति जलं वर्षितव्यमिति चरुर्मेघः ; चरन्ति तत्र प्राणिनः, चर्यते भक्ष्यते स्वप्रभवपदार्थरूपेणेति चरुः पर्वतः । "स नो' वृषन्नमुं चरुम् (ऋ० सं० १, १, १४, १)"—इति मेघस्य निगमः । पर्वतस्यान्वेषणीयः * ॥

(१३) वराहः † । वृणोतेः (स्वा० प०) । 'ग्रहवृदृनिश्चिगमश्च (३. ३, ५८)'—इत्यकारः ( अप् ) ; वरशब्दे कर्मण्युपपदे आङ्पूर्वाद्धरतेः 'कर्मण्यण् (३, २, १)' । वरमुदकमाहरतीति वराहः । वर उदकलक्षणः आहारोऽस्येति वा वराहः (निरु० ५, ४) आङ्पूर्वाद्धरतेर्घञ् । 'वरमाहारमाहार्षीः'—इति च ब्राह्मणम् । पृषोदरादित्वात् आहारशब्दस्याकाररेफयोर्लोपः । यद्वा ; वरशब्दे उपपदे हरतेः आङ्पूर्वात् 'अन्येष्वपि दृश्यते (३, २, १०१)'—इति बाहुलकात् ड-प्रत्ययः । वराहाकारो वा कृष्णो मेघो वराहशब्देन वर्त्तते । वरमुत्कृष्टमुदकं वृहति उद्यच्छति वर्षितुम् 'वृह उद्यमने (तु० प०)' * * * । हन्तेः पूर्ववत् डः । यद्वा ; वरशब्दे उपपदे जुहोतेर्दानार्थाद् डः । वरमुदकं ददाति आदत्ते वा वर्षितुमिति वराहो मेघः, पर्वतोऽपि वरमुत्कृष्टं पदार्थमाहारयति प्राणिभिः, पदार्थानां सर्वत्र सौलभ्यादाहरयतीत्युच्यते । वर

* सायणविरोधाग्रहात् सर्वैरेव एव निगमः —'प्रेद्धो भवन्नवर वराहपि (८, ८, २१, ४ ऋ० सं०)' नैव तथा व्याख्या मे हठेन कष्टकल्पना कृता।

† प० ४, १ । निरु० ५, ४ ।

चाहारोऽस्तेति वा। वराहवत् कृष्णवर्ण इति वा। वरं मूलं वृहत्युद्यच्छत्यस्मादिति वा (निरु० ५, ४)। वरं वरमित्यनेकस्य वरशब्दस्य निवृत्तिः। वरशब्दात् वृहेश्च वराह इत्यर्थः। वरमुदकमाददाति आदीयते च तस्मात् पुरुषैर्वरः पदार्थं उदकमेव वा। "विध्यद्वराहं तिरो अद्रिमस्ता (ऋ० सं० १, ४, २८, २)"— "वराहमिन्द्र एमुषम् (ऋ० सं० ६, ५, ३०, ५)"—इति च मेघस्य निगमौ। पर्वतस्यान्वेषणीय ॥

(१४) शम्बरः। 'शमु उपशमे (दि० प०)'। अत्रान्तर्णीतण्यर्थः। 'शमेर्बन् (उ० ४, ८१)'—इति बन्-प्रत्ययः। शमयति नाशयति असुरानिति शम्बो वज्रः। यद्वा; शामयतेर्बाहुलकात् बन्-प्रत्यये पृषोदरादित्वात् शमादेशः। शम्बोऽस्य प्रहर्तृत्वेनास्ति। रो मत्वर्थीयः। प्रहरति हि वज्रः इन्द्रप्रेरितो मेघात् पर्वतानाञ्च पक्षच्छेदसमये। यद्वा; सम्पूर्वाद् वृणोतेः (स्वा० प०) 'ग्रहवृदृनिश्चिगमश्च (३, ३, ५८)'—इत्यपि सम्बरः सन् वर्णव्यत्ययेन शम्बरः। सं व्रियते मेघेनाकाश, भूमिः पर्वतेन। यद्वा; शम्बरमित्युदकनाम (निघ० १, १२), मत्वर्थीयस्य लुक्, उदकमस्यास्तीति वा, उभयत्रापि तुल्यम्। "उतादर्दर्मन्युना शम्बराणि वि (ऋ० सं० २, ७, १, २)"—"अधूनोत् काष्ठा अव शम्बरं भेत् (ऋ० सं० १, ४, २५, ६)"—इति मेघस्य निगमौ। पर्वतस्यान्वेषणीय. ॥

(१५) रौहिणम्। 'रुह बीजजन्मनि (भू० प०)', भावे घञ् (३, ३, १८) रोहः आरोहणम् आदित्यप्रभादीनामस्मिन्नस्तीति।

'अत इनिठनौ (५, २, ११५)', रोहि अन्तरिक्षम्। 'तत्र भवः (४, ३, ५३)'—इत्यण् 'इनण्यनपत्ये (६, ४,१६४)'—इति प्रकृतिभावः रौहिणः। अन्तरिक्षेण हि गच्छति मेघः, पक्षच्छेदात् पूर्वं पर्वतश्चेति तत्र भव इति वक्तुं शक्यते। यद्वा; 'बहुलमन्यत्रापि (उ० २, ४६)'—इति इनच्-प्रत्यये रोहिण इन्द्रः। 'तस्येदम् (४, ३, १२०)'—इत्यण् रौहिणः। आरोहति मेघमिन्द्रः स्ववाहनत्वात्, 'तुराषाण्मेघवाहनः (अम० को० १, ४७)'—इति तत्पर्यायेषु पठ्यते। अप्सरोभिः सह रिरंसया पर्वतेष्विन्द्रस्य गमनात् तदीयता। यद्वा; उभयत्रापि छेद्य-छेदकभावेन सम्बन्धः। तथाच चरकाध्वर्यूणां ब्राह्मणे इतिहासः श्रूयते—'प्रजापतेर्वा एतज्ज्येष्ठं तोकं यत्पर्वतास्ते पक्षिण आसन्, ते यत्र यत्र कामयन्ते तत्परा तमासत, इयं हि शिथिलासीत्, तेषामिन्द्रः पक्षानच्छिनत्, तैरिमा दृंहदिति'। "अहन्नहिमभिनद्रौहिणम् (ऋ० सं० १, ७, १६, २)"—"यो रौहिणमस्फुरद्वज्रबाहुः (ऋ० सं० २, ६, ८, २)" - इति निगमौ क्रमेण॥

(१६) रैवतः। रेवत्यो गावः 'पशवो वै रेवतीः'—इति श्रुतेः। 'तस्येदम् (४, ३, १२०)'—इत्यण्। मेघो हि सर्वत्र वर्षति यवसं पानीयं च जनयित्वा तदीयो भवति, पर्वतस्तदृत्तया। यद्वा; रयिरस्यास्तीति मतुपि 'रयेर्मतौ बहुलम् (६, १, ३४ वा०)' —इति सम्प्रसारणम्, 'सञ्ज्ञायाम् (८, २, ११)'-इति वत्वम्, सर्वस्य धनस्येशितृत्वात् रेवान् इन्द्रः, मघवेति हि तस्य नाम, तदीयो रैवतः। पूर्ववत् तदीयत्वं द्रष्टव्यम्। निगमावन्वेषणीयौ॥

(१७) फलिगः। प्रतिफलति तत् फलम्। तदस्मिन्नस्तीति फलि स्वच्छमुदकं तद्गच्छत्याधारत्वेन मेघो वर्षिष्यमाण पर्वतो हि दृष्टमिति विशेषः। ड-प्रकरणे 'अन्येष्वपि दृश्यते (३, २, १०१)' —इति गमेर्ड-प्रत्ययः, स्वच्छोदकपूर्ण इत्यर्थः। यद्वा; फलवत्-स्नानपानादि-प्रयोजनवत् उदकं फलि, तद्गच्छतीति पूर्ववत्। माधवस्तु—'फलिर्भेदनकर्मापि भिन्दन् गच्छति फलसंयुक्तो गच्छतीति वा'—इति निरवोचत्। तस्यायमभिप्रायः प्रायेण मेघो हि वर्षासु ग्रीष्मजन्यं तापं भिन्दन् गच्छति, पर्वतोऽपि स्वभारेण भूमिं भिन्दन्नधोगच्छति, अन्तकाले वा शतधा स्वयमेव भिद्यमानो गच्छति नायम्। कृषिफलस्य मेघायत्तत्वात् फलसंयुक्तो गच्छति इत्युच्यते। तथाच कालिदासः—'त्वदायत्तं कृषिफलमिति भ्रूविकारानभिज्ञैः'—इति मेघकाव्यम्। पर्वतोऽपि शस्यादिरूढवृक्षादिफलसंयुक्तो गच्छति च। फलवत्त्वदशायां। फलेर्गमि गम्यादित्वादिन् ( ? ), गमेः पूर्ववत् डः ( ३, २, १०१ ) इति च। "वलं रुरोज फलिगं रवेण ( ऋ० सं० ३, ७, २६, ५ )"—इति निगमः॥

(१८), (१९) उपरः *, उपलः †। 'आ उपर उपल इत्येताभ्यां साधारणानि पर्वतनामभि ( निरु० २, २१ )'—इत्यादिभाष्यस्य स्कन्दस्वामि-ग्रन्थः—'आ उपर उपल इति; आङ् अभिविधौ मर्यादायामित्यन्ये, विना उपरउपल इत्येताभ्यां साधारणानीत्यर्थः। आ उपरादिति वक्तव्ये उभयोरुपादानं रलयोरवि-

---

* पु० ६। † निरु० २, २१।

शेषत्वप्रदर्शनार्थम् । तयोर्येकनिर्वचनत्वप्रदर्शनार्थमेकयोगपक्षं चाङ्गीकृत्याह—'उपर उपलो मेघो भवति ( निरु० २, २१ )'—इति । वक्ष्यमाणनिगमापेक्षया उपलशब्दस्य च पाषाणे प्रसिद्धत्वात् 'तेषामुपरः स्थविष्ठो मध्यमः'—इति तत् सङ्घातशब्दे पर्वत उपल-शब्दवाच्यत्वेन प्रसिद्ध एवेति मेघग्रहणं कृतम् । 'मर्यादापक्षस्य च मेघग्रहणमेव लिङ्गमिति उत्तराणि मेघस्यैवेति । यदा पर्वतस्तदा उपेत्य रमन्ते अस्मिन् अभ्राणीति, मेघपक्षे आप इति । अभि-विधिपक्षे नेदं निर्वचनम्'—इति । जनेर्विधीयमानो ड-प्रत्ययो (३, २, ९७) बाहुलकाद्रमेर्भवति (३, ३, १) ; कृदुत्तरपदप्रकृति-स्वरं (६, २, १३९) बाधित्वा अव्ययपूर्वपदप्रकृतिस्वरत्वम् (६, २, २) । 'उपरीजलवापनात्'—इति माधवः । वपेः कृदरादित्वात् (उ० ५, ४२) अरन् द्रष्टव्यः, सम्प्रसारणं च बाहुलकात् । 'उपर-मिव हि नभस्यभ्रं भूमौ पर्वतश्च'—इति माधवः । अत्र शौभीगः—'पृषिपटिदेविकेविवपिवचिभ्यश्चित्'—इत्यलच्-प्रत्ययः । श्रुत-पत्यनवधारणाद्वावगच्छते । मेघनामत्वे तत्र—"एषामुपरा उदा-यन् (ऋ० सं० ७, ७, १८, ३)"—इति निगमः । पर्वतानां चान्वे-षणीयः । "हिरण्यनिर्णिगुपरा न ऋष्टिः (ऋ० सं० २, ४, ४, ३)"—इति । अत्र 'उपरा अस्माच्छिला दीर्घाः'—इति माधवः ॥

(२०) चमसः * । 'चमु अदने ( भ्वा० प० )' ; 'अत्यविचमि ( उ० ३, ११३)'—इत्यादिना असच् ॥

(२१) अहिः † । 'इण् गतौ (अदा० प०)' ; 'इन् सार्व-

* निरु० १०, १२, १२, १८ ।

† ऋ० ११, ५, ४ । निरु० १०, ४१ ।

धातुभ्यः (उ० ४, ११४)'—इतीन् प्रत्ययः, गुणादेशो, यकारस्य हकारो व्यत्ययेन। एत्यन्तरिचे। अयतेरेव गत्यर्थादिन्-प्रत्यये पूर्ववद् व्यत्ययः। यद्वा; 'अहि गतौ' भौवादिकः (आ०), इन् प्रत्ययः, बाहुलकान्नलोपः, आगमानित्यत्वाद्वा नुम् न क्रियते। इ-प्रत्ययाधिकारे श्रीभोजदेवः—'अहिकुण्डलिकं पाश्चलोपश्च'—इति। यद्वा; 'अङ व्याप्तौ' स्वादिः (प०), इन्, अश्नोति व्याप्नोति आकाशं दिगन्तराणि वा। यद्वा; आङ्पूर्वाद्धन्तेः हिंसार्थाद् गत्यर्थाद्वा 'आङि श्रिहनिभ्यां ह्रस्वश्च (उ० ४, १३२)'—इति इण्-प्रत्ययो डिच्च, आ समन्तात् हन्ति भिनत्ति उण्णमाभिमुख्येन, हन्ति गच्छन्त्यन्तरिचम्। यद्वा; केवलादेव हन्तेर्बाहुलकादिण्-प्रत्ययो डिच्च, हिः हन्ता, न हन्ता अ-हन्ता, अहिः अ-हिंसक इत्यर्थः; सर्वदा लोकस्य वर्षप्रदत्वात्। माधवेन तु—त्वमपामपिधाना वृणोरप (ऋ० सं० १, ५, ८, ४)'—इत्यत्र, वाजसनेये तु 'सोऽग्निषोमावभिसम्बभूव सर्वा विद्यां सर्वं यशः सर्वमन्नाद्यं सर्वां श्रियं स यत्सर्वमेतत् समभवत् तस्मादहिः'—इति प्रदर्शितम्। तेन चैतद् युक्तम्। अहिशब्दोऽसुरवाचक आद्युदात्तः। "यदिन्द्राहन् प्रथमजामहीनाम् (ऋ० सं० १, २, ३६, ४)"—इति। नदीवचनोऽन्तोदात्तः। 'इन्द्रोदन्नं परि जानादहीनाम् (ऋ० सं० ८, ७, २७, ६)"—इति। अत्राहि-शब्दम्मेघनामत्वेनाभापयत् स्कन्दस्वामी। "दासपत्नीरहिगोपा अतिष्ठन् (ऋ० सं० १, २, ३८, १)" —इति निगमः[1]॥

(२२) अभ्रम् ० । 'अभ्र गतौ (भू० प०)'; पचाद्यच् (३

---

[1] निरु० २, ५ ।

१, १३४), अभ्रन्त्यस्तरिते। आपो रातीति वा अप्शब्दे कर्मण्युपपदे रातेर्दानार्थात् 'आतोऽनुपसर्गे कः (३, २, ३)', पकारस्य भकारो व्यत्ययेन (३, ४, ८८)। न भ्रंश्यत्यस्मादापो वर्षासमयादन्यत्रेति वा। यदुक्तं—'न भ्रंस्यति यतस्तेभ्यो जलान्यभ्राणि नान्यतः'—इति। नञ् पूर्वात् 'भ्रसभ्रंस अधःपतने (भ्वा० आ०)'—इत्यस्मात् 'अन्येष्वपि दृश्यते (३, २, १०१)'—इति ड-प्रत्ययः। न भ्राजते या वर्षासु मलिनवर्णत्वात् भ्राजतेः पूर्ववत् डः (३, २, १०१)। "प्र वः पिन्व विद्युदभ्रेव रोदसी (ऋ० सं० ७, ३, १, ३)"—"उदभ्राणीव स्तनयन्नियर्ति (ऋ० सं० ४, ७, १८, २)"—इति च निगमौ॥

(२३) वलाहकः। वलाकाभिर्ह्रीयते गम्यते इति वलाहकः, वारिवाहको वा ; पृषोदरादित्वात् (६, ३, १०९) वर्णागमादिना साधुः। वराह-शब्दाद्वा 'संज्ञायां कन् (५, ३, ७५)'; रेफस्य लकारः। उक्तार्थो वराह-शब्दः (१३), विकृतस्यासाधारणार्थत्वप्रदर्शनाय पुनः पाठः। निगमोऽन्वेषणीयः॥

(२४) मेघः *। 'मिह सेचने (भ्वा० प०)'; पचाद्यच् (३,१,१३४), न्यङ्क्वादित्वात् कुत्वम्। मेहति सिञ्चति वर्षणभूमिं मेघः। "हर्या वां मेघो हर्यणा पीपाय (ऋ० सं० २, ४, २६, २)"—"अस्मिन् मेघे विद्युत् ( ? )"—इति च निगमौ॥

(२५) दृतिः। 'दृ विदारणे (क्र्या० प०)'। 'दृणातेर्ह्रस्वश्च (उ० ४, १७८)'—इति ति-प्रत्ययः, ह्रस्वविधानसामर्थ्याद् गुणो न

* निरु० २, ३;—२१।

भवति। दीर्यते इन्द्रेण, इतिवत् स्यन्दमानाधारत्वाद्वा। 'इतिं सु कर्षं यषितं न्यंचम् ( ऋ० सं० ४, ४, २८, २ )"—"ईशानो विसृजद् इतिम् ( ? )'—इति च निगमौ॥

(२६) ओदनः *। उदकशब्दे उपपदे ददातेः 'कृत्यल्युटो बहुलम् (३, ४, ११३)'—इति कर्त्तरि ल्युट्। ओदनः उदकदातेत्यर्थः। * * *। यद्वा ; 'उन्दी क्लेदने (रु० प०)' ; 'उन्देर्नलोपश्च ( उ० २, ७२ )'—इति युचप्रत्ययः, गुणः ; उनत्ति वनभूमिम् ओदनः। "धारयत् पक्वमोदनम् ( ऋ० सं० ६, ५, ३०, १)"—इति निगमः॥

(२७) हृषन्धिः। 'हृष सेचने (भू० प०)' ; 'कनिन्युवृषीत्यादिना ( उ० १, १५४ ) कनिन्, हृषा। शत्रुजयादिसाधनत्वात् कामानां वर्षिता यज्ञः, सन्निधीयतेऽस्मिन्निन्द्रेण प्रहारकाले 'कर्मण्यधिकरणे च ( ३, ३, ९३ )'—इति कि-प्रत्ययः न लोपाभावश्छान्दसः। "विषन्धि."—इति केषुचित् कोशेषु दृष्टम्। तदा विषं जलं धीयतेऽस्मिन्निति निर्वाहः, सुगागमश्छान्दसः। निगमदर्शनान्निर्णयः। "हृषा हृषन्धिश्चतुरश्रिमस्यन् ( ऋ० सं० ३, ६, ७, २)"—इति मेघनाम न वेति सन्दिग्धम् †॥

(२८) हृवः ‡। हृणोते राच्छादनार्थात् (स्वा० प०) 'अमिचिमिमिदिशंसिभ्यः क्रन् § (उ० ४, ४,१५८)'—इति क्रन्-प्रत्ययो

---

* निरु० ६ १४।

† 'हृषन्धि मेघ-भेदनहारण वर्षं कुर्वन्तम्'—इति सायणीयभाष्यम्।

‡ प० २, १०। निरु० २, १६,—१७। § 'क्त'—इति मूलपाठ।

बाहुलकाद् भवति ; आच्छादयति ह्यसौ कृत्स्नं नभः। वर्त्ततेर्वा गतिकर्मणः (निघ० २, १४) 'स्फायितञ्चिवञ्चि (उ० २, १२)'—इत्यादिना रक्प्रत्ययः ; गच्छत्यसौ कृत्स्नं नभः। वर्द्धतेर्वा वृद्ध्यर्थात् (भू० आ०) बाहुलकात् वन् , धकारस्य तकारो व्यत्ययेन ; वर्द्धते हि वर्षासु मेघः। ब्राह्मणोक्ता एवामी अयोऽप्यर्थाः—'यदिमांल्लोकानवृणोत् तद् वृत्रस्य वृत्रत्वम् , स इषुमात्रमिषुमात्रं विष्वङ् अवर्द्धत'—इति। "वृत्राय वज्र मीशानः कियेधाः (ऋ० सं० १, ४, २८, २)"—"अहन्यद् वृत्रमर्यं विविरपः (ऋ० सं० ८, ८, ५, १)"—इति च निगमौ॥

(२८) असुरः *। 'असु क्षेपणे (दि० प०)'; 'असिमसोरुरन् (उ० १, ४२-४३)'—इति उरन्-प्रत्ययः ; अस्यति क्षिपति भूमौ जलम्। यद्वा ; अस्यते क्षिप्यते स्थाने इन्द्रेण वर्षार्थम्। यद्वा ; अस्ति (भू० प०) तिष्ठति 'शृस्वृस्निहित्रप्यसिवसि (उ० १, १०)'—इत्यादिना उ-प्रत्ययः असुः। शरीरे वसतीत्यसुः प्राणः। 'प्राणा वा आपः'—'पानीयं प्राणिनां प्राणाः'—इत्यादिदर्शनात् असु-शब्देनात्र जलमुच्यते। तद्राति, 'आतोऽनुपसर्गे कः (३, २, ३)। यद्वा ; जलवान् प्राणवान् वा। रो मत्वर्थीयः। यद्वा ; 'अस गतिदीप्त्यादानेषु' भौवादिकः स्वरितेत् ; पूर्वस्मादेव सूत्रादुरन्। असति गच्छत्यन्तरिक्षे, दीप्यते स्वयम् , आदत्ते वा जलं वर्षितुम्। यद्वा ; 'सुर ऐश्वर्ये (तुदा० प०)', इगुपधलक्षणः कः (३, १, १३५), सुरतीति सुर ईश्वरः स्वतन्त्र इत्यर्थः, असुरः अनीश्वरः, इन्द्रादिपर-

* निघ० १, ८।

तन्न इत्यर्थः। "दिवः श्येनासो असुरस्य नीळयः (ऋ० सं० ८, ४, २४, १)"—"दीर्घा धियोरक्षमाणा असुर्यम् (ऋ० सं० २, ७, ६, ४)"—इति च निगमौ॥

(२०) कोशः *। क्रोशतेः शब्दकर्मणः (भू० प०) पचाद्यचि (३, १, १३४) पृषोदरादित्वा (६, ३, १०९) द्रेफलोपः कोशः। मेघो हि गर्जितलक्षणं शब्दं करोति। कुप्यतेर्वा इहार्थात् (दि० प०), अस्मिन्नेवार्थे पकारस्य शकारः, इगुमात्रमवर्द्धतेत्युक्तम्(२८)। क्रोशतिश्छादनार्थइति माधवः, पूर्ववदवच्छादयत्यसौ इत्स्नं नभः। जलस्य कोशस्थानीयत्वात् कोश इत्यन्ये। यद्वा; 'कु शब्दे (तु० आ०', 'कुदापाभ्यः शः'—इति श्रीभोजदेवः; कौति (अदा०प०) गर्जितशब्दं करोति कोश। "दिव्या न कोशासो अभ्रवर्षाः (ऋ० सं० ७, ३, २४, ६)"—"महान्तं कोशमुदचा नि षिञ्च (ऋ० सं० ४, ४, २८, ३)"—इरि च निगमौ॥

इति त्रिंशन्मेघनामानि॥ १०॥

श्लोकः[1]। धारा[2]। इळा[3]। गौः[4]। गौरी[5]। गान्धर्वी[6]। गभीरा[7]। गम्भीरा[8]। मन्द्रा[9]। मन्द्राजनी[10]। वाशी[11]। वाणी[12]। वाणीची[13]। वाणः[14]। पविः[15]। भारती[16]। धमनिः[17]। नाळीः[18]।

---

* निरु० ५, २६।

(१८) "नाली" क ख, घ। पर क-पुस्तकोदाहृत-निगम-विरोधादुपे क्षित। "नालि" ग. घ, ङ। "नीलि" C D F, छ।

मेना[१९] । मेळिः[२०] । सूर्या[२१] । सरस्वती[२२] । निवित्[२३] । स्वाहा[२४] । वग्नुः[२५] । उपब्दिः[२६] । मायुः[२७] । काकुत्[२८] । जिह्वा[२९] । घोषः[३०] । स्वरः[३१] । शब्दः[३२] । स्वनः[३३] । ऋक्[३४] । होत्रा[३५] । गीः[३६] । गाथा[३७] । गणः[३८] । धेना[३९] । ग्नाः[४०] । विपा[४१] । नग्ना[४२] । कशा[४३] । धिषणा[४४] । नौः[४५] । अक्षरम्[४६] । मही[४७] । अदितिः[४८] । शची[४९] । वाक्[५०] । अनुष्टुप्[५१] । धेनुः[५२] । वल्गुः[५३] । गल्दा[५४] । सरः[५५] । सुपर्णी[५६] । बेकुरा[५७] । इति सप्तपञ्चाशद् वाङ्नामानि * ॥ ११ ॥

---

(१९). (२०) कातिरिक्तेषु सर्वत्रैव व्यत्ययपाठः "मेळिः मेना:" इति। "मेनि." ग. iid प० २, २०।

(२४) "स्वाहः" ख। (२५) "वग्नु" ग. iid, छ।

(२८) "काकुप्" ग iid, छ। (२९) "जिह्वं" ख।

(३८) 'गणा'—इत्यपि टीकासम्मतः पाठः।

(४०) "ग्नाः"—इति क-D-E-पुस्तकातिरिक्तेषु सर्वेषु, परं क-पुस्तकस्य टीकायामनुक्तत्वात् प्रामाण्यम्।

(४२) "नना"—इत्येव कातिरिक्तसर्वपुस्तकेषु, परं टीकाकृता कैश्चिद्-व्याख्यातपाठान्तं द्योतितम्। निरु० ६, ६।

(५१) "अनुष्टुप्"—इति ख। (५३) "वगु" ग C. D. F, छ।

(५४) "गल्दा" ख E। "गल्द" ग C. F, छ। "गल्दाः" D, छ।

(५५) "रसः" ग. C. F, छ। प० १२. २, ७। "रास" D, छ।

(५७) "वेकु." ख, छ। * "इति वाच." ग।

'आ उपर उपल इत्येताभ्यां साधारणानि पर्वतनामभिः। * *। वाङ्नामान्युत्तराणि (निरु० २, २१—२३)'—इति भाष्ये स्कन्दस्वामी—'उत्तराणि सप्तपञ्चाशत् श्लोकइत्यादीनि वाङ्नामानि। उच्यते इति वाक् इन्द्रियम्, तत्कार्यः शब्दोऽप्युच्यते इति वाक्, उच्यतेऽनया अर्थः इति वाक्, स्तनयित्नुलक्षणा माध्यमिका साप्युच्यते इति वाक्, तदधिष्ठात्र्यपि देवता वागिष्यते। सर्वतश्चास्या मेघहेतुत्वात् मेघनामस्य उत्तराणीति। स च वाक्-शब्दो 'वचिपरिभाषणे (अदा० प०)'—इत्यस्मात् धातोः 'क्विप् वचि (उ० २, ५४। ३, २, १७८ वा०)'—इत्यादिना क्विपि दीर्घत्वे सम्प्रसारणाभावे च व्युत्पन्नः॥

(१) श्लोकः *। 'श्रु श्रवणे (भू० प०)'; 'इण्भीकापाशल्यतिमर्चिभ्यः कन् (उ० ३,४३)'—इति कन्-प्रत्ययो बाहुलकाद्भवति, गुणः, कपिलकादित्वात् लत्वम्; श्रूयते इति श्लोकः। यद्वा; 'श्लोक सङ्घाते (भू० आ०)'; 'पुंसि सञ्ज्ञायां घः (३, ३, ११८); श्लोक्यते पद्यते रूपेण संहन्यते कविभिः श्लोकः 'पद्ये यशसि च श्लोक' (३, ३, २)'—इत्यमरसिंहः। "ऋतस्य श्लोको बधिरा ततर्द (ऋ० सं० ३, ६, १०, ३)"—"श्लोको न यातामपि वाजी अस्ति (ऋ० सं० ७, ६, ११, ५)"—इति निगमौ॥

(२) धारा †। 'धृञ् धारणे (भू० उ०)'; 'हेतुमति च (३,१, २६)'—इति णिचि 'एरजण्यन्तानाम् (३,३,५६ भा०)'—इत्यस्याप्रापकत्वादेव 'कृत्यल्युटो बहुलम् (३, ३, ११३)'—इति कर्त्तरि

* निरु० ८, ८।    † निरु० १३, ९।

भवति। यद्वा ; धारेः पचाद्यच् (३, १, १३४) ; लोकस्य धारयित्री वर्षप्रदानेन स्वाभिधेयस्य वा। "तनसहे सुधारा"—इत्यत्र धारा वाङ्नाम। "धारा सुतस्य रोचते ( ऋ० सं० ७, ६, २४, १)"—"यः ससाद् धारा सुतस्य (ऋ० सं० १, ५, ११, ४ )"—इति च निगमौ ॥

(३) इळा *। 'इल प्रेरणे (तु० प०)' ; इगुपधेभ्यः ( ३, १, १३५) कर्तरि विधीयमानः कः प्रत्ययो बाहुलकाद् (३, ३, १) भवति। क्षिप्यते प्रेर्यते उच्चारणकाले प्राणेन ; इला। बह्वृचानां लत्वमुक्तं पूर्वमेव(१)। यद्वा ; 'ईड़ स्तुतौ (अदा० आ०)'—'ञि इन्धी दीप्तौ (रु० आ०)' ; आभ्यां पूर्ववत् कः ( ३, ३, १ ), पृषोदरादिः (६, ३, १०९) ; ईड़ति स्तुयतेऽनया देवता ईड्यते वा या स्वयं देवतात्वात्, दीपयति यथोक्तारं, दीप्यते वा स्वेन तेजसा। यद्वा ; इलेत्यन्ननाम ( निघ० २, ७ ), अकारो मत्वर्थीयः ; यजमानानां देयेनान्नेन हविर्लक्षणेन वा तद्वती इला। "अभि न इळा यूथस्य माता ( ऋ० सं० ४, २, १६, ४)"—इति निगमः ॥

(४) गौः †। व्याख्याता पृथिवीनामसु(१)। गच्छति यत्र वाहृता, गीयते स्तूयते वा। "अयं स शिङ्क्ते येन गौ रभीवृता ( ऋ० सं० २, ३, १८, ४)"—इति निगमः ॥

(५) गौरी ‡। रोचतेर्ज्वलतिकर्मणः ( निघ० १, १६ )। 'ऋज्रेन्द्राग्रवज्रविप्रकुब्र (उ० २, २०)'—इत्यादि-सूत्रेण रन्-प्रत्ययान्तो गौरशब्दो निपातितः, तस्माद्रुचेर्धातोर्गावादेशः, 'पिप्पल्यादि-

* पृ० १।११ पं० ८ प०।

१ पृ० १। ७ पं० १ पं० ‡ प० ५, ३। निरु० ११, ४८।

भ्यश्च (४, १, ४१)'—इति ङीष्। स्वया दीप्त्या ज्वलति वाग्-देवतात्वात्। यद्वा; 'गूरी उद्यमने (तु० आ०)', अस्मात् इनि पूर्ववन्निपातनादुकारस्यौकारः, 'रोरि (८, ३, १४)'—इति रेफ-लोपः, ङीष्; गुरते उद्यच्छति स्वमभिधेयम्; उद्यमनं चात्र प्रकाशनम्। यद्वा; 'गुङ् अव्यक्ते शब्दे (भ्वा० आ०)'—इत्यस्मान्नि-पातनादिनि वृद्धिः; गवते गर्जितलक्षणमव्यक्तशब्दं करोतीति गौरी। यद्वा; शुक्लवर्णत्वात् गौरी, 'भास्वत्कपर्दा शशिकला-मिन्दुकुन्दावदाताम्'—इत्याचार्याः, 'सर्वशुक्ला सरस्वती'—इति च। "गौरीर्मिमाय सलिलानि तक्षति (ऋ० सं० २, ३, २२, १)"—सोमो' गौरी अधिश्रितः (ऋ० सं० ६, ७, ३८, ३)"—इति च निगमौ॥

(६) गान्धर्वी। गविगन्ध्यव्ययो वः ( ? )। 'धृञ् धारणे (भ्वा० उ०)'—इत्यस्मात् गोशब्दोपपदाद्वा व-प्रत्ययः, उपपदस्य गवादेशः, गन्धर्वः; गोर्यज्ञस्य धारयितेन्द्रः। भोजस्तु 'गन्धेरक् च'—इति व-प्रत्ययोऽधिकृतः धातोरगागमश्च। गन्धयते अर्दयति हिनस्ति देवशत्रूनिति गन्धर्वः इन्द्रः। 'गन्ध अर्दने'—इति धातु-श्चुरादिरात्मनेपदी। 'तस्येदम् (४, ३, १२०)'—इत्यण्, ङीप् (४, १, १५), गान्धर्वी। ऐन्द्रीत्यर्थः। तथाच ब्राह्मणम्—'अथ यैन्द्रवायवी तस्यै यदैन्द्रं पदं तेन वाचं कल्पयति, वागैन्द्री (ऐ० ब्रा० २, ४, २)'—इति। यद्वा; गन्धर्वा देवानां गायकाः, तेषा-मियम्। अथाचैतरेयब्राह्मणे-'सोमो वै राजा गन्धर्वेष्वासीत् (ऐ० ब्रा० १, ५, १)'—इत्यस्मिन् खण्डे वाचो गान्धर्वीत्वं स्पष्टमुक्तम्।

भवति। यद्वा ; धारेः पचाद्यच् (३, १, १३४) ; लोकस्य धारयित्री वर्षप्रदानेन स्वाभिधेयस्य वा। "तनसहे सुधारा"—इत्यत्र धारा वाङ्नाम। "धारा सुतस्य रोचते ( ऋ० सं० ७, ६, २४, १)"—"यः ससाद धारा मृतस्य (ऋ० सं० १, ५, ११, ४ )"—इति च निगमौ ॥

(३) इळा *। 'इल क्षेपणे (तु० प०)' ; इगुपधेभ्यः ( ३, १, १३५) कर्त्तरि विधीयमानः कः प्रत्ययो बाहुलकाद् (३, ३, १) भवति। क्षिप्यते प्रेर्यते उच्चारणकाले प्राणेन ; इला। बहूचानां लडमुक्तं पूर्वमेव(१)। यद्वा ; 'ईड़ स्तुतौ (अदा० आ०)'—'जि इन्धी दीप्तौ (रु० आ०)' ; आभ्यां पूर्ववत् कः ( ३, ३, १ ), पृषोदरादिः (६, ३, १०९) ; ईड़ति स्तूयतेऽनया देवता ईड्यते वा या स्वयं देवतात्वात्, दीपयति प्रयोक्तारं, दीप्यते वा स्वेन तेजसा। यद्वा ; इलेत्यन्ननाम ( निघ० २, ७ ), अकारो मत्वर्थीयः ; यजमानानां देयेनान्नेन हविर्लक्षणेन वा तद्वती इला। "अभि न इळा यूथस्य माता ( ऋ० सं० ४, २, १६, ४)"—इति निगमः ॥

(४) गौः †। व्याख्याता पृथिवीनामसु(१)। गच्छति यत्रेव्याहृता, गीयते स्तूयते वा। "अयं स शिङ्क्ते येन गौ रभीवृता ( ऋ० सं० २, ३, १८, ४)"—इति निगमः ॥

(५) गौरी ‡। रोचतेर्ज्वलतिकर्मणः ( निघ० १, १६ )। 'ऋज्रेन्द्राग्रवज्रविप्रकुब्र (उ० २, २७)'—इत्यादि-सूत्रेण रन्-प्रत्ययान्तो गौरशब्दो निपातितः, तस्माद्रुचेर्धातोर्गावादेशः, 'षिद्गौरादि-

* पृ० १। १५ पं० ८ प०।

१. पृ० ११। † पृ० ६ पं० ‡ प० ५, ५। निरु० ११, ४८।

भ्यश्च (४, १, ४१)'—इति ङीष्। त्वया दीप्त्या ज्वलति वाग्देवतात्वात्। यद्वा; 'गूरी उद्यमने (तु० आ०)', अस्मात् इति पूर्ववन्निपातनादुकारस्यौकार', 'रोरि (८, ३, १४)'—इति रेफलोपः, ङीप्; गुरते उद्यच्छति स्वमभिधेयम्; उद्यमनं चात्र प्रकाशनम्। यद्वा; 'गुङ् अव्यक्ते शब्दे (भू० आ०)'—इत्यस्मान्निपातनादिति वृद्धिः; गवते गर्जितलक्षणमव्यक्तशब्दं करोतीति गौरी। यद्वा; शुक्लवर्णत्वात् गौरी, 'भास्वत्पदां शशिकलामिन्दुकुन्दावदन्ताम्'—इत्याचार्याः, 'सर्वशुक्ला सरस्वती'—इति च। "गौरीर्मिमाय सलिलानि तक्षति (ऋ० सं० २, ३, २२, १)"—सोमो गौरी अधिश्रितः (ऋ० सं० ६, ७, ३८, ३)"—इति च निगमौ॥

(६) गान्धर्वी। गविगन्ध्यव्यशो वः ( ? )। 'धृञ् धारणे (भू० उ०)'—इत्यस्मात् गोशब्दोपपदाद्वा व-प्रत्ययः, उपपदस्य गवादेशः, गन्धर्वः; गोर्यज्ञस्य धारयितेन्द्रः। भोजस्तु 'गन्धेरक् च'—इति व-प्रत्ययोऽधिकृतः धातोरगागमश्च। गन्धयते अर्दयति हिनस्ति दैवशत्रूनिति गन्धर्वः इन्द्रः। 'गन्ध अर्दने'—इति धातुश्चुरादिरात्मनेपदी। 'तस्येदम् (४, ३, १२०)'—इत्यण्, ङीप् (४, १, १५), गान्धर्वी। ऐन्द्रीत्यर्थः। तथाच ब्राह्मणम्—'अथ यैन्द्रवायवी तस्यै यदैन्द्रं पदं तेन वाचं कल्पयति, वागैन्द्री (ऐ० ब्रा० २, ४, २)'—इति। यद्वा; गन्धर्वा देवानां गायकाः, तेषामियम्। तथाचैतरेयब्राह्मणे-'सोमो वै राजा गन्धर्वेष्वासीत् (ऐ० ब्रा० १, ५, १)'—इत्यस्मिन् खण्डे वाचो गान्धर्वीत्वं स्पष्टमुक्तम्।

*'तां गन्धर्वोऽवदीत् गर्भे अन्तः'*– इति श्रुतिः। "अग्निर्गोर्न्धर्वी पथ्यां ऋतस्य ( ऋ० सं० ८, ३, १५, ६)"—इति निगमः॥

(७) गभीरा *, (८) गम्भीरा †। भीयन्ति (दि० प०) रातीति (अदा० प०) भीराः। 'आतोऽनुपसर्गे कः (३, २, ३)'। गवां भीरा गभीरा गम्भीरा च। पृषोदरादित्वात् (६, ३, १०९) गो-शब्दस्य ग-भावो गम्भावश्च। स्तनयित्नु-लक्षणा हि माध्यमिका वाक् श्रूयमाणैव सर्वप्राणिनां भियमादधाति। यद्वा; उणादौ गभीरादि सूत्रेण गमेर्द्धातोरीरन्-प्रत्यये नुमागमो मकारस्य विकल्पेन लोपो निपात्यते ( उ० ४, ३४ )। गच्छति यत्र, अधिगम्यते वा ज्ञानार्थिभिः। यद्वा; 'गाधृ प्रतिष्ठालिप्सयोर्ग्रन्थे च' भौवादिकः (आ०), अस्य झस्त्वं, भशान्तादेशः, वा च नुम् निपात्यते। प्रतिष्ठिता स्वस्मिन् स्थाने, लिप्स्यन्ते वा प्राणिभिः, ग्रथिता वा गद्यपद्यादिरूपेण गभीरा गम्भीरा। उभयोरपि निगमावन्वेषणीयौ॥

(९) मन्द्रा ‡। 'मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु (भू० आ०)'। गच्छति स्वाभिधेयं प्राप्नोति, अधिगम्यते वा तदर्थिभिः। "स मन्द्रया च जिह्वया (ऋ० सं० ५,२,२२,३)"—इति निगमः॥

(१०) मन्द्राजनी। मन्द्रशब्दो व्याख्यातः। 'अज गतिक्षेपणयोः (भू० प०)', ल्युट्। मन्द्रे अजनं गमनं क्षेपणं प्रेरणं सुखारणं वा यस्याः सा मन्द्राजनी, पिप्पल्यादिषु द्रष्टव्यम्। ( ४, १,

---

* प० १२. १, ३,—१०।  † प० ३, १०।
‡ निरु० ११, २८,—२९।

४१ ग०) "मन्द्राजनी चोदते अन्तरासनि (ऋ० सं० ७, २, २१, २)"—इति निगमः॥

(११) वाशी *। 'वाशृ शब्दे' दैवादिकः (आ०)। 'वसिवपियजिराजिव्रजिध्वजिसदिहनिकमिवाशिवादिवारिभ्य इञ् (उ० ४, १२१) कर्मणि कारके वा दृश्यते, वाशिः। 'कृदिकारादक्तिनः (४, १, ४५ वा०)'—इति ङीष्, वाशी। "ते वाशीमन्त इष्मिणो अभीरवो (१, ६, १३, ६)"—"वाशीभिस्तक्षताश्मन्मयीभिः (ऋ० सं० ८, ५, १८, ४)"—इति च निगमौ॥

(१२) वाणी †। 'वण शब्दे (भू० प०)'। बाहुलकादिञ् (उ० ४, १२१। ३, ३, १), ङीष् (४, १, ४५ वा०)। "वाणीः पुरुहूतं धमन्तोः (ऋ० सं० ३, २, २,१०)"—"अभिवाणीर्ऋषीणां सप्त नूषत (ऋ० सं० ७, ५, ६, ३)"—इति निगमौ॥

(१३) वाणीची। वाणीं स्तुतिरूपां वाचं अञ्चति गच्छतीति विग्रहः 'ऋत्विगित्यादिना (३, २, ५८) क्विनि न-लोपे, 'अचः (६, ४, १३८)'—इत्यकारलोपे 'अञ्चतेश्चोपसङ्ख्यानम् (४,१,६ वा०)—इति ङीप्। "रये वाणीच्याहिता (ऋ० सं० ४, ४, १५, ४)"—इति निगमः॥

(१४) वाणः। वणति शब्दयते वाणः। 'अकर्त्तरि च कारके सञ्ज्ञायाम् (३, ३, १९)'—इति घञ्। यद्वा; वणनं शब्दनं वाणः, भावे घञ् (३, ३, १८), अर्शआदित्वादच् (५, २, १२७)।

---

* पं० ४, १९। निरु० ४, १९,—१८।

† निरु० १२।

स्तुतिमती हि वाक्। "दौना दचा वि दुहन्ति प्र वाणम् (ऋ॰ सं॰ ३, ६, १२, ४)"— इति निगमः ॥

(१५) पविः *। 'पूञ् पवने (क्र्या॰ उ॰)'; 'अचइः (उ॰ ४, १३४)'—इति इ-प्रत्ययः। पुनाति हि वाक्। 'पावका नः सरस्वती ( ऋ॰ सं॰ १, १, ६, ३ )'—इति मन्त्रः। पूयते वा सङ्कीर्त्तनादिना, 'वाचं गौरिकथालापप्रसङ्गे पुनीमहे' इत्युक्तेः। पूयतेऽनयेति वा शुद्धिकरणं हि वाक्। 'पवित्रं हि वाग् विदुषाम्'—इति माधवः। "वाणस्य चोदया पविम् ( ऋ॰ सं॰ ७, १, ७, १)"—इति निगमः ॥

(१६) भारती †। 'डु भृञ् धारणपोषणयोः (भ्वा॰ उ॰)'; 'भृमृदृशियजिपर्विपच्यमितमिनमिहर्यिभ्योऽतच् (उ॰ ३, १०७)'। भरतशब्दात् 'प्रज्ञादिभ्यश्च ( ५, ४, ३८ )'—इति स्वार्थिकोऽण्, ङीप् (४, १, १५)। बिभर्त्ति जगदर्थप्रदानेन, स्वाभिधेयं वा भ्रियते प्राणिभिः व्यवहारसाधनत्वेन। अथवा 'अग्निर्भरतः, प्राणो भूत्वा सर्वीषि बिभर्त्ति'—इति वाजसनेयकम्; तदीया भारती। तथाच 'अग्निर्वाक् भूत्वा मुखं प्राविशत्'—इत्युपनिषत् (ऐ॰ उ॰ १,८)। अथवा 'भरतः ( निघ॰ ३, १८ )'—इति ऋत्विङ्नाम; तदीया, स्तुतिसाधनत्वात् भारती। "आ भारती भारतीभिः सजोषा (ऋ॰ सं॰ २, ८, २३, ३)"—इति निगमः ॥

(१७) धमनिः ‡। धमतिर्गतिकर्म्मा ( निघ॰ २, १४ ),

---

* पा॰ २, २०, ४, २। निरु॰ ५, ५ १२, ३०।
† निरु॰ ८, १३।
‡ निरु॰ ६, २४।

'अर्त्तिस्तुसुहुधम्यश्यश्यवितरिभ्योऽनिः (उ० २,८५)'—इत्यनि-प्रत्ययः। गत्यर्था बुध्यर्थाः। गम्यते ज्ञायते अनया अर्थः, ज्ञायते वा विद्वद्भिः साध्वसाधुविभागेन। यद्वा; 'धमति'—इति वधकर्मस्वपि पठ्यते (निघ० २, १८)। हन्तेऽनया शापाक्रोशादिरूपयेति। तथाच 'वज्र एव वाक्'—इति ब्राह्मणम् (ऐ० ब्रा० २, ३, ३)। वाक्ला-यका वदनाद्विःसरन्ति पौराहताः'—इति च महाभारतम्। "इन्द्रेषितां धमनिं पप्रथन्नि (ऋ० सं० २, ६, ४, ३)"—इति निगमः॥

(१८) नाळीः। 'नल गन्धे (भू० प०)'; 'वसिवपियजिराजि-व्रजि (उ० ४, १२१)'—इत्यादिना विहितः इञ्-प्रत्ययो बाहुल-कात् भवति, 'कृदिकारात् (४, १, ४५ वा०)'—इति ङीप्, व्यत्ययेन सोर्विसर्जनीयः। 'गन्ध अर्दने (चु० आ०)', 'अर्द हिंसा-याम् (भू० प०)'—इति पठ्यते। गन्धनं हिंसात्मकं सूदनम्, सूचयति परमर्म्माणि। "श्यमस्य धम्यते नाळीः (ऋ० सं० ८, ७, २३, ७)"—इति निगमः॥

(१९) मेना *। 'मान पूजायाम् (चु० आ०)'—इत्यस्मात् 'बहुलमन्यत्रापि इनच् भवति (उ० २, ४६)'—इति वचनादिनच्, बहुलग्रहणाच्च-लोपः। पूज्यतेऽनया गुर्वादिरुपदेशवाक्येन, पूज्या वा देवतात्वात्। "आमेनां कृणवन्नच्युतो भुवद्गीः (ऋ० सं० ८, ६, १०३)"—इति निगमः। 'मेनां गर्जितशब्दम्'—इति माधवः॥

(२०) मेळिः †। सम्पर्कार्थो धातुः (चु० आ०)। पूर्ववत्

* प० ३, १८। निरु० ३, २१। † प० ५, ०।

बाहुलकादिन्। सम्पृक्ता ह्यर्थेन वाक्। तथाच—'वागर्थाविव सम्पृक्तौ'—इति (रघौ १, १) कालिदासः। 'मेळिं मदन्तं पित्रो-रुपस्थे (ऋ० सं० ३, १, २७, ४)"—इति निगमः। मत्वर्थीयस्य लुकि वाग्मिन मित्यर्थः। "मेलि. स्यात् वाणयोजनात्"—इति माधवः * ॥

(२१) सूर्या †। सर्त्तेर्गत्यर्थात् (भ्वा० प०), सुवतेर्वा प्रेरणार्थात् (तु० प०) 'राजसूय सूर्य (३, १, ११४)'—इत्यादिना निपातनात् क्यपि सर्त्तेरुत्वं सुवतेर्वा रुडागमः। सरति गच्छति स्रोतॄन् प्रति, कर्णशष्कुलिं वा सुवति प्रेरयति चोदनारूपा पुरुषादीनिदं कुर्विति। यद्वा; सुपूर्वादीरतेः 'कृत्यल्युटो बहुलम् (३, ३, ११३)'—इति कर्मणि क्यपि निपातनाद्रूपसिद्धिः। सुष्ठु ईर्यते उच्चार्यते इति सूर्या। यद्वा; 'षु प्रेरणे (स्वा० उ०)', 'सुसूधीगृधिभ्यः क्रन् (उ० २, २३)'—इति क्रन्-प्रत्ययः। ईर्यते उच्चारणकाले प्राणिन सूरा 'छन्दसि स्वार्थे ( ? )'—इति यत् प्रत्ययः, सूर्या। यद्वा; सूरयो मेधाविनः, तानर्हति 'छन्दसि च (५, १, ६७)'—इति यत् प्रत्ययः। यद्वा; सूरिषु साधुः तत्र साधुः (४, ४, ९८)'—इति यत्। निगमोऽन्वेषणीयः॥

(२२) सरस्वती ‡। सर्त्तेरसुन् ( उ० ४, १८४ ) सरः। गद्यपद्यादिरूपेण प्रसरणमस्यास्तीति 'प्रज्ञायामेधास्रजोविनिः

---

* 'मेलि मेलकं नानाप्रकारागतानां वाक्यानाम् एकस्मिन्नर्थे सङ्घस(स्य)य कारम्'—इति सायणः।

† प० ५, ६। निरु० १२, ७।

‡ प० १, १२ ५, ५। निरु० २, २३. ९, २६. ११, २५।

(४,२,१२१ ), 'बहुलं छन्दसि (४,२,१२२)'—इत्युक्ते मतुपि ङीष् । यद्वा ; सर इत्युदकनाम (निघ० १, १२ । सर्वेस्तद्वती ह्यधिदेवतात्वादुदकवती हि माध्यमिका वाक् । सैव चासीन्नदी सरस्वती । तदुक्तं भाष्यकारेण—'तत्र सरस्वतीत्येतस्य नदीवत् देवतावच्च निगमा भवन्ति (निरु० २, २३ '—इत्यादिना । "पावका नः सरस्वती ( ऋ० सं० १, १, ६, ३ )"—इति निगमः देवतायाः । "इयं शुष्मेभिः (ऋ० सं० ४, ८, ३०, २)"—इत्येषा नद्याः ॥

(२३) निवित् । 'विद ज्ञाने ( अदा० प० )', 'नि-पूर्वः'। 'सत्सू द्विषद्रुहदुह ( ३, २, ६१ )'—इत्यादिना क्विपि [अन्तर्णीतण्यर्थत्वात् विदिः] नितरां वेदयति ज्ञापयति स्वमभिधेयम् । "तान् पूर्वया निविदा हूमहे वयम् (ऋ० सं० १, ६, १५, ३)"—इति निगम ॥

(२४) स्वाहा * । यस्य शब्दो यादृङ्निर्वचनं दृष्टं तत्सर्वं तद्रूपेणैव लिख्यते । अत्र निरुक्तम्—'स्वाहेत्येतत् सु आहेति वा स्वा वागाहेति वा स्वं प्राहेति वा स्वाहुतं हविर्जुहोतीति वा (निरु० ८, २०)'—इति । अस्य स्कन्दस्वामी—स्वाहेत्येतत् स्वाहाकृति-शब्दस्य पूर्वपदं स्वाहाकारान्तो होममन्त्राणां कर्त्तव्यः,' न ह वै आहुतयो देवान् गच्छन्ति य अवषट्कृता वा अस्वाहाकृता वा भवन्ति ( शत० ब्रा० ८, ३, ६—१४ )'—इतिश्रुतेः । स्वाहाकारस्य सम्प्रदानत्वेन मन्त्रान्तेऽवश्यभावित्वात् । अयमर्थः यस्यान्ते श्रूयते स होममन्त्रः शोभनमर्थमाह । अथवा प्रजापतेः स्वा आत्मीया वागाहेति स्वाहाकाररूपा वाक् प्रजापतिसृष्टेत्यर्थः ।

* प० ८, २० । निरु० ८, २० ।

अथवा स्वं प्राहेति यजमानस्य, स्वं हविः देवतायै दत्तं तदुद्देशेन त्यागात्; तस्य यजमानो सीवं प्राहेति स्वाहा; सम्प्रदानत्वं स्वाहाकारस्य स्पष्टमनेन प्रकारेण दर्शितं स्वाहुतमित्यादिना। अथवा यदनेन स्वाहाकारेण जुहोति तदेव सुष्ठुमर्यादया जुहोतीति; एवञ्च सति पूर्वकाणि निर्वचनानि ब्रूमः। इदन्तु जुहोतेरिति। अत्र भास्करमिश्रः—'स्वयं सरस्वती स्वाह सूते'। 'स्वैव मे वागित्यब्रवीत्'—इति ब्राह्मणम्। स्वयमेवाहेत्यस्यार्थस्य द्योतकोऽयं निपातः प्रदेशान्तरेऽपि विभक्त्यन्तसमुदायात्मनिपातः स्वाहेति। संस्कारविशेषानवधारणाच्चावगम्यते। अत्र क्षीरस्वामी—'सुष्ठु आह्वयति स्वाहा'। अत्र स्वाहा-शब्दो नाव्ययम् अग्निजायावाचित्वमित्यर्थः। भाष्ये तु स्वाहा-शब्दस्य वाङ्नामत्वेनाभिव्यक्तेष्टानि निर्वचनानि लिखितानि; तेषु यथोचितं तद् गृह्णन्तु विद्वांसः। तस्याः वाचः स्रष्टी पृथिवी चाग्निश्चेति वाचोऽग्नेश्च कारणकार्यभावः श्रूयते। 'अग्निर्वाक् भूत्वा मुखं प्राविशत् (ऐ० उ० १, ८)'—इति। तस्मादग्नेर्वाचश्च सम्बन्धात् अग्नायी स्वाहा वागित्युच्यते। वाति वातात्मत्वेन वागुच्यते इति सन्देहः। निगमः सुलभः स्वाहाकारपदे, अन्यत्रान्वेषणीयः॥

(२५) वग्नुः। 'वच भाषणे (अदा० प०)'; 'वचेर्गश्च (उ० ३, ३२)'—इति नु-प्रत्ययः, चकारस्य गकारश्च। वग्नुः वाचा समानोऽर्थः। "वग्नु मियर्त्ति यं विदे (ऋ० सं० ६, ८, ४, १)"—"इन्द्रस्येव वग्नुरा शृण्व आजौ ( ऋ० सं० ७, ४, १२, ३ )"—इति च निगमौ॥

(२६) उपब्दिः । उप-पूर्वात् पदेर्गत्यर्थात् (दि० आ०) 'इन सर्वधातुभ्यः (उ० ४, ११४)'—इतीन्-प्रत्ययो बाहुलकादुपधालोपः, 'न पदान्तद्विर्वचन (१, १, ५८)'—इत्यनेन जश्विधिं प्रति स्थानिवद्भावनिषेधात् 'झलां जश् झशि ( ८, ४, ५३ )'—इति पकारस्य बकारः । उप समीपे भक्तानां गच्छति, उप आचार्यसमीपे गम्यते इति वा । यद्वा ; उ-पूर्वात् ददातेः (जु० उ०), द्यतेः (दि० प०), दयतेः (भू० आ०) वा 'कृत्यल्युटो बहुलम् (३, ३, ११३)'—इति बहुलवचनात् 'उपसर्गे घोः किः (३, ३, ९२)'—इति कि-प्रत्ययः कर्त्तरि भवति बकारश्चोपजनः । उपेत्य ददातीत्यभिलषितम्, प्रयोक्तॄणां, खण्डयत्यज्ञानं तर्कादिसमये प्रतिवादिनां वा, रक्षति भक्तानिति वा उपब्दिः । "आघोषयन्तः पृथिवीमुपब्दिभिः (ऋ० सं० ८, ४, २९, ४)"—"उपब्दिरियर्त्ति सोमः ( ऋ० सं० ७, ३, २४, ५)"—"शृण्व आयता मुपब्दि. (ऋ० सं० २, ४, ९, २)"—इति निगमाः ॥

(२७) मायुः * । 'डु मिञ् प्रक्षेपणे (क्र्या० उ०)' । 'कृवापाजिमिस्वदिसाध्यशूभ्य उण् (उ० १, १)', 'मीनातिमिनोतिदीङां ल्यपि च (६, १, ५०)'—इत्यात्वम्, 'आतो युक् चिण्कृतोः (७, ३, ३३)'—इति युक् । चिप्यते प्रेर्यते उच्चार्यते इति मायुः, प्रक्षिपति हुग्धदकं भूमाविति वा । "मिमाति मायुं ध्वसनावधिश्रिता (ऋ० सं० २, ३, १९, ४)"—इति निगमः ॥

(२८) काकुत् † । 'कैगैरै शब्दे (भू० प०)' । सम्पदादि-

---

* निघ० २, ९ ११, ४२ ।          † प० ४, १ । निघ० १, ११ ।

त्वात् ( ३, २, ८४ वा॰ ) क्विप्। कानं शब्दनं करोतीति का, मृगय्वादित्वात् कुः, ( उ॰ १, ३६ ) बाहुलकात् तकार उपजनः। यद्वा ; 'ककवक लौल्ये भू॰ आ॰)', 'मृग्रोरुतिन् (उ॰ १, ८१)'—इत्येव बाहुलकाद् (३, ३, १) अत्याद् भवति णिच्च काकुत्। ककते चञ्चला भवति एकस्मिन्नर्थे न प्रतितिष्ठतीत्यर्थः ; तथाहि शब्दा अनेकार्था बहवः, एकार्थाय काकादिनाभिधीयमाना अनेकार्था भवन्ति। ककुदुत्थान मस्यास्तीति काकुत्। मत्वर्थीयस्य लुक्, छान्दसो दीर्घः, सर्वथा पृषोदरादिरयं शब्दः। "या ते काकुत् सुकृता या वरिष्ठा ( ऋ॰ मं॰ ४, ७, ११, २ )"—इति निगमः॥

(२८) जिह्वा ०। 'शेपयाह्वजिह्वाग्रीवाप्वामीवा'-इति निपाताः। लिह आस्वादने (अदा॰ उ॰)', व-प्रत्यये, आल्पादेर्जकारो निपात्यते। लेह्यास्वादयत्यनया अन्नविषयावमारात्। यद्वा ; आह्वयते (भू॰ उ॰) जुहोते (जु॰ प॰) वाऽयं यङन्तस्य कः, सम्प्रसारणम् 'अभ्यस्तस्य च (६, १, ३३)'—इति, सम्प्रसारणे च 'न धातुलोप आर्धधातुके ( १, १, ४ )'—इति गुणनिषेधादुवङादेशे रूपम्। जोहूयाति पुनःपुनराह्वयति शब्दं करोति रसान् वादयते जुहोत्यम्नावन्नि, जोहुवा सति ओकारस्येकारादेशे उकारलोपे च जिह्वा। "पुरो विप्रा दधिरे मन्द्रजिह्वम् ( ऋ॰ मं॰ १, ७, २६, १)"—'घृतपाव' वृषभं मन्द्रजिह्वम् ( ऋ॰ मं॰ २, ४, १२, १ )"—इति च निगमौ॥

---

[illegible]

(३०) घोषः *। 'घुष शब्दार्थः (भू० प०)'; 'हलश्च (३, ३, १२१)'—इति घञ्। घुष्यते शब्द्यते घोषः। "उतो पितृभ्यां प्रविदानु घोषम् (ऋ० सं० ३, १, २, १)"—"इन्द्रे घोषा असृक्षत (ऋ० सं० ६. ४, ४३, १)—इति च निगमौ॥

(३१) स्वरः। 'स्वृ शब्दोपतापयोः (भू० प०)'; पुंसि संज्ञायां घः (३, ३, ११८)। स्वर्यते शब्द्यतेऽनेन देवता उपतप्यतेऽनया मर्मस्पृक्प्रयुक्तयेति वा। स्वरतिरर्चतिकर्मा वा (निघ० ३, १)। स्वर्यते स्तूयते देवतात्वात्। 'गोचरसञ्चर (३, ३, ११९)'—इत्यत्र चकारस्यानुक्तसमुच्चयार्थत्वात् घः। यद्वा; स्वरति देवतामिन्द्रादिम्; पचाद्यच् (३, १, १३४)। "स्वरश्च मे श्लोकश्च मे (य० वा० सं० १८, १)"—इति निगमः॥

(३२) शब्दः। शपत्याक्रोशे शाशपिभ्यां दानौ। अस्य वृत्तिग्रन्थः—'शपते अनेनेति शब्दः संस्कृता वाक्। भर्त्सा तृतीये इति योगविभागात् अचतुर्थेऽपि तृतीयं भवति'—इति। 'शब्दनं शब्दः' —इति क्षीरस्वामी। खेऽन्तरिक्षे शब्दं करोतीति वा। "शब्दो रोगिणो मीमांसा च ( ? )"—इति निगमः॥

(३३) स्वनः। 'स्वन शब्दे भू० प०)'; 'स्वनहसोर्वा (३, ३, ६२)'—इत्यप्। स्वन्यत इति स्वनः। "सिन्धोरूर्मेरिव स्वनः (ऋ० सं० ७, १, ७, २)"—इति निगमः॥

(३४) ऋक् †। ऋच्यते (तु० प०) स्तूयतेऽनया। यद्वा; स्तूयते स्वयं देवतात्वात्। 'ऋच स्तुतौ (तु० प०)'—इत्यस्मात्

* निरु० ९, ९। † निरु० १, ८।

सम्पदादित्वात् ( ३, ३, ९४ वा० ) क्विप्। "ऋचा वंनेे मानृचः ( ऋ० सं० ८, ५, २७, ३)"—इति निगमः॥

(३५) होत्रा *। 'हु दानादानयोः (जु० प०)' 'हुयामाश्रुभसिभ्यस्त्रन् ( उ० ४, १६८ )। ह्रयतेऽनया मन्त्ररूपया हविः, ह्रयतेऽस्यां प्राणः, ह्रयते वा प्राणः। तथाच—'वाचि हि प्राणं जुहुमः प्राणे वा वाचम्'—इत्युपनिषत् (ऐ०)। यद्वा; होत्रेति यज्ञनाम (निघ० ३, १७), ह्रयतेऽस्मिन् हविरिति यज्ञश्च वागित्युच्यते तत्साध्यत्वात्। वाचं यच्छति वाग्वै यज्ञः'—इति ब्राह्मणम् (ऐ० ब्रा० ५, ४, ५)। ऋतुयाजप्रैषेषु दशमे प्रैषे—"वनेम तद्धोत्रया चितन्त्या (ऋ० सं० २, १, १७, २)"—इति निगमः, "वीतिहोत्रं त्वा कवे ( ऋ० सं० ४, १, १८, ३ )"—इति च निगमः॥

(३६) गीः †। गृणातिरर्चतिकर्मा (निघ० ३, १४), औणादिकः क्विप्, 'ऋत इद्धातो ७, १, १००)', 'र्वोरुपधाया दीर्घ इकः (८, २, ७६)'—इति दीर्घः, हल्ङ्यादिलोपः ( ६, १, ६८ ), रेफस्य विसर्जनीयः। गृणात्यनया गीः। "तमिद्वर्धन्तु नो गिरः ( ऋ० सं० ६, १, १०, ३)"—इति निगमः॥

(३७) गाथा। 'गै शब्दे (भू० प०)', अर्चतिकर्मा च (निघ० ३, १४); 'उपिकुषिगार्तिभ्यस्थन् ( उ० २, ३ )। गायतीत्यसौ देवताः, गायन्ति तामिति वा गाथा। "तं गाथया पुराण्या (ऋ० सं० ७, ४, २५, ४)"—"युञ्जन्ति हरी इषिरस्य गाथया (ऋ० सं० ६, ७, २, ३)"—इति निगमौ॥

---

* पं० ३, १७। † निरु० १, १०, ६, ३४, १०, ५।

(३८) गणः * । 'गण गणने' चुरादिरदन्तः (प०) । 'अकर्त्तरि च कारके सञ्ज्ञायाम् (३, ३, १९)'—इति घञ् । 'अतोलोपः (६, ४, ४८) । गण्यते या गणः, अतोलोपस्य स्थानिवद्भावात् वृद्धिर्न भवति । गणेति केचित् पठन्ति । निगमोऽन्वेषणीयः ॥

(३९) धेना † । दधातेर्लटः शानचि व्यत्ययेन एत्वाभ्यासलोपौ दधाना स्वमभिधेयं वर्षप्रदानेन लौकिकाय वा । यद्वा ; 'धेट् पाने (भू० प०)' ; धेटश्च (उ० ३, १०)' इति न-प्रत्ययः इकारस्यान्तादेशः, गुणः, धयन्ति तामिति धेना । पानमत्र स्वोकारः । यद्वा ; आस्वादः । धीयते पीयते आस्वाद्यते वानेन, धयन्ति प्राणमिति वा धेना । तथाच—'तं माता रेळ्हि स उ रेळ्हि मातरम्'—इति श्रुतिः (ऋ० सं० ८, ६, १६, ४) । यद्वा ; 'धिविः प्रीणनार्थः (भू० प०)' बाहुलकात् न-प्रत्ययो नकार-वकारयोर्लोपश्च, गुण, धेना । प्रीणयति हि वाक् सुष्ठु प्रयुक्ता । 'धेना वाक् प्रीणनाद्धि वा'—इति माधव । "धेना जिगाति दाशुषे' (ऋ० सं० १, १, ३, ३)"—"जनानां धेना अवचाकशद्वृषा ( ऋ० सं० ७, ८, २५, १)"—इति च निगमौ ॥

(४०) ग्नाः ‡ । गमेर्धातोः (भू० प०) 'धापॄवस्यज्यतिभ्यो नः ( उ० ३, ६ )'—इति बाहुलकात् न-प्रत्ययो भवति टि लोपश्च । टाप् (४, १, ४) । गत्यर्था बुध्यर्थाः । जानन्ति काममिति ग्नाः । यद्वा ; गच्छति यज्ञेष्वभूत् । 'अभि यज्ञं गृणीहि नो ग्नावः (१, १, २८, ३)' इयत्र छन्दांसि वै ग्नाः'—इति ब्राह्मणम्'—इति

* निरु० ६, १६ । † निरु० ६, १७ । ‡ निरु० ३, २१. १०, ४७. १२, ४६ ।

माधवः। * * *। तस्मात् छन्दसां गायत्र्यादीनां वाग्रूपत्वात् ग्ना-व्यपदेशः। निगमोऽन्वेषणीयः * ॥

(४१) विपा। 'विप् क्षेपे (चु० प०)'। सम्पदादित्वात् (३, ३, ९४ वा०) क्विप्। तृतीयैकवचनम्। प्रेर्यते मनसा विपा। 'मनसा वा इषिता वाग्वदति ( ऐ० ब्रा० २, १५ )'—इति ब्राह्मणम्। "वरुणाय विपा गिरा ( ऋ० सं० ४, ४, ६, १ )"-इति निगमः। गिरेति पदं निरुक्त्या योजनीयम् ॥

(४२) नग्ना। न गच्छति पितृकुलात् बाल्यात्, अनावरणापि न गच्छति लज्जामिति वा। 'नग्निकाऽनागतार्त्तवा'—इत्यमरः (२, ६, ८)। नग्ना कन्या। ग्ना शब्दः पूर्वमेव निरुक्तः, इह न-पूर्वः। नायं नञ्, किन्तु प्रतिषेधार्थोऽयं निपातः, अतो 'न लोपो नञः (६, ३, ७३)'—इति न भवति। * * *। "नना" —इति केचित्। नमतेः नं-प्रत्ययो बाहुलकान्मकारलोपश्च। नमयत्यनयेति नना। निगमोऽन्वेषणीयः ॥

(४३) कशा †। 'काशृ दीप्तौ (भू० आ०)'। अन्तर्णीतण्यर्थः। पचाद्यच् (३, १, १३४)। आकारस्य ह्रस्वत्वं छान्दसम्। प्रकाशयत्यर्थान्। यद्वा; स्थिरया सती वर्णव्यत्ययादिना कशा; वाग्घि मुखात् काशते तत उपलब्धेः। यद्वा; 'कश शब्दे (भू० प०)'। अत्र शब्दायते कशा। यद्वा; 'कश गतौ (भू० प०)'; अच् (३, १, १३४)। गच्छति गन्तव्यम्। "या वां कशा मधुमती (१, २, ४, ३)"—इति निगमः ॥

---

* एष एव निगमः—'ऊधर्न ग्ना जरन्ते ( ऋ० सं० ५, ७, १८, २ )'—इति। 'ग्नापि च ग्ना', ग्ना छन्दांसि'—इति तत्र सायणव्याख्या। † निरु० ८, १८।

(४४) धिषणा *। धारयत्यर्थमिति धीः बुद्धिः। धारयति कर्त्तारं फलप्रदानेनेति धीः कर्म्मबुद्धिः कर्म वा। सनोति सम्भजते इति सनोतिः (षणु त० उ०) पचाद्यचि (३, १, १३४), पृषोदरादित्वात् (६, ३, १०९) पूर्वपदकृत्स्वत्वे च धिषणा। यद्वा; 'ञि धृषा प्रागल्भ्ये (स्वा० प०)'। 'धृषेर्धिष् च सञ्ज्ञायाम् (उ० २, ८०)' —इति क्युप्रत्ययो धिषादेशश्च धिषणा। प्रगल्भसमर्था रचितुं जगद् वर्ष-प्रदानेनेत्यर्थः। यद्वा; 'दिधिषामि विप्रैः (ऋ० सं० २,७, २३, १२)'—इत्यत्र स्कन्दस्वामिना पठितात् 'धिषि धारणे' —इत्यस्मात् 'धिष शब्दे †' (जु० प०)'—इति धातुपाठपठिताद्वा बाहुलकात् क्युप्रत्ययो धिषणा वाचि स्वाभिधेयं धारयति सम्बन्धस्य नित्यत्वात्। शब्दायते वा मेघे अधिश्रिता 'मिमाति मायुं धिषणाधि श्रिता (ऋ० सं० २, ६, १९, ३)'—इति श्रुतिः। "आपश्च मित्रं धिषणा च साधन् (ऋ० सं० १,७,३,१)"—इति निगमः॥

(४५) नौः ‡। 'णुद प्रेरणे (तु० उ०)'; 'ग्लानुदिभ्यां डौ (उ० २, ६०)'—इति डौ-प्रत्ययः। नुद्यते प्रेर्यते मूलाधारादिस्थानेभ्यः प्राणेन। नमतेर्वा (भू० प०) बाहुलकात् (३, ३, १) डौ, नम्यते वा देवतात्वात्। "सुतर्माणमधिनावं रुहेमेति यज्ञो वै सुतर्मा नौः कृष्णाजिनं वै सुतर्मा नौ र्वाग्वै सुतर्मा नौः (ऐ० ब्रा० १, ३, २)"—इति ब्राह्मणम्, "समितौ नाव्याहितम् (ऋ० सं० ८, ६, २२, ४)"—इति च निगमौ॥

---

* निरु० ८, २। प० ३, ३०।

† 'अथ धारणार्थोऽपि'—इति सायण (ऋ० स० २, ७, २४, २)।

‡ निरु० ५, २२।

(४६) अक्षरम् *। 'अशू व्याप्तौ (स्वा० आ०)'; 'अश भोजने (क्रया० प०)'। अशेः सरन् †, (उ० ३,६७)'—इति सरन्-प्रत्ययः, व्रश्चादिना (८, २, ३६) षत्वम्, 'षढोः कः सि (८,२,४१)'। अश्नुते श्रोतुं स्वाभिधेयम्, व्याप्नोति वा अश्नाति वा हविः। अक्षेर्वा (रु० प०) बाहुलकात् सरन् नकार-लोपश्च। 'खरि च (८, ४, ५५)'—इति चर्त्वम्। अनक्ति म्रक्षयति सेचयति वर्षेण भूमिम्। यद्वा; नञ्-पूर्वात् क्षरतेः (भू० प०) पचाद्यच् (३, १, ११३)। न क्षरति, सर्वदा सर्वैः प्रयुज्यमानापि न क्षीयतइत्यर्थः। 'वाग्वै समुद्रो न वै वाक् क्षीयते'—इति (ऐ० आ० ५, ३, १) ब्राह्मणम्। "अक्षरेण प्रति मिम एताम् (ऋ० सं० ७, ६, १३, ३)"—इति निगमः। 'वाचा विरूपनित्यया'—इत्यर्थं माधवोऽवादीत्। "उपाक्षरा सहस्रिणी' (ऋ० सं० ५, २, १८, ४)"—इति च निगमः॥

(४७) मही ‡। व्युत्पादिता पृथिवीनामसु (१, १२)। मह्यते पूज्यतेऽनया देवता इति वा। "अमात्रं त्वा धिषणा तित्विषे मही (ऋ० सं० १, ७, १५, २)"—इत्यत्र वाङ्नामत्वमपि युज्यते॥

(४८) अदितिः §। व्युत्पादिता पृथिवी नामसु (१, १४)। अदीना, सर्वदा सर्वैः प्रयुज्यमानापि न क्षीयतइत्यर्थः। "अनागसो अदितये स्याम (ऋ० सं० १, २, १५, ५)"—इति निगमः॥

(४९) शची ‖। अत्र क्षीरस्वामी—'शच श्वच गतौ'। शच-

* प० १९। निरु० ११, ४१। † 'सरः'—इति मूलपाठः। ‡ निरु० ११, ८।
§ प० २, ११. ३, २०. ४, १. ५, ५। निरु० ४, २२. ११, २२।
‖ प० २, १. ३, ८। निरु० १, ११. १२, २७।

तीति तु धातुपाठे गत्यर्थो न दृष्टः । 'अच व्यक्तायां वाचि (भू० आ०)' ; 'इन् सर्वधातुभ्य (उ० ४ पा० ११४) । 'कृदिकारात् (४, १, ४५ वा०)'—इति ङीष् । अचते गच्छति यज्ञम् , अच्यते गम्यते ज्ञायतेऽनयाऽर्थः, अचति व्यक्तां वाचं करोतीति वा । "अचौमेदन्ते उत दक्षिणाभिर्निर्जिह्मायन्त्यो नरकं पतोम (निरु० १,११)" —इति निगमः ॥

(५०) वाक् * । निरुक्ता पूर्वमेव (पृ० ८१) । "यद्वाग् वदन्त्यविचेतनानि ( ऋ० सं० ६, ७, ५, ४)'—इति निगमः ॥

(५१) अनुष्टुप् † । स्तोभतिर्वृद्ध्यर्थः ( भू० आ० ) । क्विप् । अनुपूर्वेण क्रमेण, पूर्वमकारात्मना ततः स्पर्शादिभिर्व्यज्यमाना वर्द्धते । तथाचोपनिषत्—'अकारो वै सर्वा वाक् सैव स्पर्शोष्मभिर्व्यज्यमाना बह्वी नानारूपा 'परा' 'पश्यन्ती' 'मध्यमा' 'वैखरी' इति । तथाच 'विरूपं वक्ति वाक् तावकं वपुः'—इति संविग्प्रकाशे वामनदत्तः । 'ध्वनि वर्णं पदं वाक्यमित्याहुः पदचतुष्टयम् । यस्याः सूक्ष्मादिरूपेण वाग्देवीं ता मुपास्महे'—इति श्रीभोजदेवः ‡ । श्रुतिस्तुतिषु चत्वारि वाक् परिमितानि पदानि ( निरु० १३, ८ )'—इत्यत्र निरुक्त्या एव वा वृद्धिः प्रतिपादिता । यद्वा ; पूर्वं पश्चाग्रदचरात्मना ततो गद्यपद्यादिरूपेण वर्द्धते । तथाहि—'परिमिता वर्णा अपरिमितां वाचोगति माप्नुवन्ति'—इयि भगवानाश्वलायनः । यद्वा ; स्तोभति रर्चतिकर्मा (निघ० ३, १४) । आनुपूर्व्येण स्तौति

* प० ५ ५ । निरु० २, २३ ८, २१ ११, २७ ।

† निरु० ७, १२ ।

‡ भोजराजीय-व्याकरणस्य मङ्गलाचरणमिदम् ।

देवता:। "अनुष्टुभमनु च चर्यमाणमिन्द्रम् ( ऋ० सं० ८, ७, १०, ४)"—इति निगमः॥

(५२) धेनुः *। 'धेट् पाने (भू० प०)'। 'धेट इच्च (उ० ३, ३३)'—इति नु-प्रत्ययः, इकारोऽन्तादेशः। धयति ता मिति धेनुः, धीयते हि वा तत्प्रवृत्तवृष्टिद्वारेण, धेनुवद्दोग्ध्री सर्वकामान् इति वा। 'अधेन्वा चरति माययैष वाचं शुश्रुवाऽ अफलामपुष्पाम् (ऋ० सं० ८, २, २३, ५)'—इति श्रुतिः। "गौर्गौः कामदुघा सम्यक् प्रयुक्ता स्मर्यते बुधैः'—इति दण्डी। तथाचागमः—'एक शब्दः सम्यक् जातः सुष्ठु प्रयुक्तः स्वर्गे लोके कामधुग् भवति (म० भा०)'—इति। "अभि सप्त धेनवः (ऋ० सं० ७, ३, १६, ५)"—"नेष्टुः सचन्त धेनवः (ऋ० सं० २,५,२६,५)"—इति च निगमौ॥

(५३) वल्गुः। 'वल संवरणे (भू० आ०)'। 'वलेगुक् च (उ० १, १८)'—इत्यु-प्रत्ययः। संवरणेनाच्छादयति जगत् व्याप्नोतीति यावत्। यद्वा; वल्गतिः शब्दार्थः (भू० प०), बाहुलकादु प्रत्ययः। गर्जितादिलक्षणं शब्दं करोति वल्गुः। "अयं नाभा वदति वल्गु वो गृहे (ऋ० सं० ८, २, १, ४)"—इति निगमः॥

(५४) गल्दा †। 'गल अदने' भौवादिः (प०)। गलनं पूरणं कामानां, गलः पूरणार्थः स्कन्दस्वामिनोक्तः, तद्ददाति। 'आतोऽनुपसर्गे कः (३, २, ३), गल्दा। निगमोऽन्वेषणीयः॥

(५५) सरः ‡। 'सृ गतौ (भू० प०)'; असुन् प्रत्ययः (उ० ४, १८४)। गत्यर्थाः बुद्ध्यर्थाः। सरति जानाति सर्वं देवतात्वात्,

---

* प० ५, ५। निरु० ११, ४२।   † प० ४, १। निरु० ६, ३४।

‡ प० १२। निरु० ५, ११. ८, २६।

शायते वा विद्वद्भिः, सरति गच्छत्येव वाङ्ता। "सरो न पर्णमभितो वर्दन्तः (ऋ० सं० ५, ७, ४, २)"—इति निगमाः। अत्र प्रकरणात् स्तोत्रशस्त्रात्मिका वागुच्यते एवं माधव ऐच्छत् ॥

(५६) सुपर्णी *। सुपर्णशब्दो रश्मिनामसु व्याख्यातः (१, ५)। 'पाककर्णपर्णपुष्पफलमूल (४, १, ६४)'—इत्यादिना ङीप्। निगमोऽन्वेषणीयः ॥

(५७) बेकुरा †। 'भा दीप्तौ (अदा० प०)'; कान्तिं करोतीति किञ्चित् विग्टह्य करोते रौणादिके क-प्रत्यये कृते 'उदोष्ठ्यपूर्वस्य (७ १, १०२)'-'बहुलं छन्दसि (७, १, १०३)'—इति ऋटकारस्यानोष्ठ्य-पूर्वस्यापि उकारो भकारस्य बकारेण आकारस्य एकारेण च व्युत्पत्तिश्छान्दसत्वात् बेकुरा दीप्तिकारिणी प्रयोक्तुः। "बेकुरानामासि जुष्टा (ता० म० ब्रा० १, १, ३)"—इति निगमः। छन्दोगानां सामकल्पे ‡ पठितोऽयं मन्त्रः। 'व्यचे व्याप्तिकर्मणः बेकुरा'—इति भरतस्वामि-भाष्यम् ॥

इति सप्तपञ्चाशत् वाङ्नामानि ॥ ११ ॥

अर्णः(१)। क्षोदः(२)। क्षद्म(३)। नभः(४)। अम्भः(५)। कवन्धम्(६)। सलिलम्(७)। वाः(८)। वनम्(९)। घृतम्(१०)।

---

* पृ० ४ पं० १८ प० १। निरु० ७, ११। † निरु० ६, २६।

‡ ताण्ड्यमहाब्राह्मणस्याद्याध्यायस्य सामकल्प उच्यते।

(१) "अर्णा"—इति ङ।

(३) "सद्म" ख। "सद्म" ग। "सद्म" घ। "सद्म"—ङ।

(६) "कबन्धम्" क-ङ-भिन्नेषु सर्वेषेव, मुद्रिते ऋग्वेदसंहितापुस्तके चैकत्र (५ २ १५, ३) दृश्यते, परं टीकाक्रमानविरुद्ध।

मधु[११]। पुरीषम्[१२]। पिप्पलम्[१३]। क्षीरम्[१४]। विषम्[१५]। रेतः[१६]। कशः[१७]। जन्म[१८]। बृबूकम्[१९]। बुसम्[२०]। तुग्र्या[२१]। बुर्बुरम्[२२]। सुक्षेम[२३]। धरुणम्[२४]। सिरा[२५]। अररिन्दानि[२६]। ध्वस्मन्वत्[२७]। जामि[२८]। आयुधानि[२९]। क्षपः[३०]। अहिः[३१]। अक्षरम्[३२]। स्रोतः[३३]। तृप्तिः[३४]। रसः[३५]। उदकम्[३६]। पयः[३७]। सरः[३८]। भेषजम्[३९]। सहः[४०]। शवः[४१]। यहः[४२]। ओजः[४३]। सुखम्[४४]। क्षत्रम्[४५]। आवयाः[४६]। शुभम्[४७]। यादुः[४८]। भूतम्[४९]। भुवनम्[५०]। भविष्यत्[५१]। महत्[५२]। आपः[५३]। व्योम[५४]। यशः[५५]।

---

(१७) "शकम्" C. D. F। (१८) "जन्म" C। "जन्म" ग. D F।

(२२) "बुर्बुरम्"—इति पाठ टीकाकृत्सम्मतः। "बुबुरः"—इति ग. C. D. F पुस्तकेषु ; पश्चीऽन्यत्र सर्वत्रैव "बर्बुरम्"—इति।

(२३) "सुक्षेमा" ख। "सुक्षीम"—इत्यपि टीकाकृत्सम्मतः।

(२५) "सुरा" च ङ. टीकाकृत्सम्मतपाठाभावेन। "सुरा" ख. F। "सूरा, ग, ङ।

(२६) "अररिन्दानि" ख. ग, छ।

(२८) "जामिः ख ग. D. F, छ। "जामिवत्"—इत्यपि टीकाकृत्सम्मतः।

(३२) "अक्षरा" ग, ङ। "अक्षरः" C D. F, छ।

(३७) "पय"—इत्येव कातिरिक्तेषु सर्वत्र, पर टीकाविरुद्ध। पृ० ७।

(४०) "सहः" ग. C. D F।

(५१), (५२) एवमेवानपूर्वी पाठः, टीकाकृत. सम्मत, ग-पुस्तके च।

महः[५६] । सर्णीकम्[५७]। स्वृतीकम्[५८]। सतीनम्[५९] । गहनम्[६०] । गभीरम्[६१] । गम्भरम्[६२] । ईम्[६३] । अन्नम्[६४]। हविः[६५]। सद्म[६६]। सदनम्[६७] । ऋतम्[६८]। योनिः[६९] । ऋतस्य योनिः[७०] । सत्यम्[७१]। नीरम्[७२]। रयिः[७३] । सत्[७४] । पूर्णम्[७५] । सर्वम्[७६] । अक्षितम्[७७] । बर्हिः[७८] । नाम[७९] । सर्पिः[८०] । अपः[८१] । पवित्रम्[८२]। अमृतम्[८३]। इन्दुः[८४]। हेम[८५] । स्वः[८६] । सर्गाः[८७]। शम्बरम्[८८]। अभ्वम्[८९]। वपुः[९०]। अम्बु[९१]। तोयम्[९२]। तूयम्[९३]। कृपीटम्[९४]। शुक्रम्[९५]। तेजः[९६]। स्वधा[९७]। वारि[९८]। जलम्[९९]। जलाषम्[१००]। इदम्[१०१]। इत्येकशतमुदकनामानि * ॥ १२ ॥

---

(५७) "सर्वीकम्" क ख C D F पुस्तकेभ्यो, सर्वत्रैव पाठः, परं टीकाविरोधादुपेक्ष्य ।
(५८) "सृतीकम्"—इत्यपि टीकाकृत्सम्मतम् । ग C. D F पुस्तकेषु तु "स्तृतीकम्"—इत्यस्य पुरस्तात् "सृतीकम्"—इति, परस्ताच्च "सतीकम्"—इति द्वे पदेऽधिके दृश्येते ।
(५९) "सतिनम्" ख, ङ । (६२) "गम्बरम्" ग C. D F, ङ । निरु० १४, ११ ।
(६३) इतः परम् "कम्"—इत्यधिकम् ग C D F, ङ । ऋ० १, ८ । निरु० १, ८ ; १४ ४, १८ ९, ३५ । (६६) "सद्म"—ङ । (७५) "पूर्णम्"—इति ख ।
(७६) "सर्वम्"—ङ । (८२) "पवित्रम्"—ङ । (८५) "हेमा" ख ङ ।
(९१) "अम्भ" C. D, ङ । (९३) पदं न दृश्यते ग C. D, F पुस्तकेषु ।
(९४) "कबोटम्" ग F, ङ । "कृपोटम्" C. D, ङ । (९५) "शक्रम्" च (अमात्) ।
(९८) इतोऽनन्तरम् "चत्वरम्"—इत्येतदधिकं ग C. D I पुस्तकेषु ।
* "इत्युदकस्य" ग० ।

'उदकनामान्युत्तराण्येकशतम् (निरु० २, २४)'—

(१) अर्णः *। 'ऋ गतौ (भू० प०)'। 'उदके नुट् च (उ० ४,१९२)'—इति अर्त्तेरसुन् प्रत्ययः। अर्यते तत् प्राणिभिरित्यर्थः। ऋच्छति निम्नं प्रदेशमिति वा अकारान्तोऽप्यस्ति †। 'ऋ गतौ (क्रया० प०)', पचाद्यच् (३, १, १३४)। ऋणाति गच्छति दिवो भूमिं ह्रयमाणम्। "सृजदर्णांस्यव यद्युधा (ऋ० सं० २, ४, १६, ४)"—"अग्ने दिवो अर्णमच्छा जिगासि ( ऋ० सं० ३, १, २२, ३)"—इति निगमौ॥

(२) क्षोदः। 'क्षुदिर् सम्प्रेषणे' भौवादिः स्वरितेत्। असुन् ( उ० ४, १८४ )। क्षुद्यते क्षोदः। क्षुण्णं हि जलं पर्वतादिभ्यः शिलादिष्वधःपतनात्। "नावा न क्षोदः प्रदिशः पृथिव्याः (ऋ०सं० ८, १, १८, ७)"—"याभीरसाङ्क्षोदसोद्गः पिपिन्वथुः (ऋ० सं० १, ७, ३५, २)"—इति च निगमौ॥

(३) क्षद्म ‡। 'क्षद स्थैर्ये (सौ०)'—इति स्कन्दस्वामी। 'क्षद गतिहिंसनयोः (सौ०)—इति सुबोधिनीकारः। 'अन्येभ्योऽपि दृश्यते (३, २, ७५)'—इति मनिन्। क्षदीति पिपासादनिवर्त्तने। स्वकार्ये स्थिरं भवति जलाशयं व्याप्य स्थिरं भवतीति वा। तथाच 'स्थावराद् गच्छासि'-इति श्रुतिः, गतावर्णसोरसमित्यर्थः। हिनस्ति पिपासा मुखं वा अतीप्सितं वा पुरुषम्। "क्षद्मेवार्येषु तर्त्तरीथ उग्रा (ऋ० सं० ८, ६, २, २)"—इति निगमः॥

---

* प०१० २, १४। † निरु० ११, २०। ‡ प० २, ७।

(४) नभ. * 'णह बन्धने (दि० उ०)' ; 'नहेर्दिवि भश्च (उ० ४, २०५)'—इति विधीयमानोऽसुन् भकारादेशश्च बाहुलकादुदकेऽपि भवतः । नह्यते हि तन्मेघैर्दिवि भूमौ सेचादिभिः, नह्यति प्राणिनां मनांसीति वा । प्राणिनो हि यत्रोदकं विद्यते तत्रैव स्नातुं मन कुर्वते । तथा—'स-मनसः खलु वै पशवोऽनाहतास्ते पशवो हि स-मनस.'—इति श्रुतिः । न न भातीति वा ; एकस्य नञो लोपः इतरस्य न-लोपाभावः । भातेरसुनि टिलोपश्च बाहुलकात् । भात्येव स्वया दीप्त्या देवतात्वात् । यद्वा ; नभ इव नभः । तथा-स्वरनिर्वचन 'अम्बुवद्राजते'-इत्यादिना ग्रन्थेन (२७ पृ०) आकाशस्य जलसाम्य मुक्तम्, साम्यस्योभयनिष्ठत्वात् अत्र जलस्याकाशसदृशमित्युच्यते । "मदच्युतमौशानं नभोजाम् (ऋ० सं० ७, ७, २५, ४)"—"नभोवसानः परियास्यध्वरम् (ऋ० सं० ७,२, ८,५)"—इति च निगमौ ॥

(५) अम्भ. † । 'आप्लृ व्याप्तौ (स्वा० प०)' । उदके नुम्भौच (उ० ४, २०४), अत्रापो ह्रस्वोऽसुन्निति (उ० ४, २०२) च वर्त्तते । व्याप्नोति सर्वमम्भः । तथाचाथर्वणो श्रुतिः—'सर्वमिदमम्भः (अथ० ब्रा० १)'—इति, 'आपो वा इदं सर्वम् (अथ० ब्रा० १)'—इत्यादिरनुवाकश्च । "अम्भः किमासीद् गहनं गभीरम् ( ऋ० सं० ८, ७, १७, १)"—इति निगमः ॥

(६) कवन्धम् ‡ । बन्धिरनिभृतत्वे (निरु० १०, ४), निभृतं

---

* पु० ४ । प० २, २० । निरु० ९, १४ । † प० १, ३० ।
‡ निरु० १०, ४ ।

चञ्चल मतोऽन्यदनिभृत मचञ्चलम् तदनिभृतं, कवन्धः कमनीयञ्च तद्बन्धं चेत्यर्थः। कर्मेर्डप्रत्यये कः, बन्धेः पचाद्यचि बन्धः इति निर्वाहः। यद्वा ; कं सुखं बध्नाति स्नानपानादिना। कर्मण्यन्। बवयोरविशेषात् वकारः ; कवन्धम्। "नीचीनबारं वरुणः कवन्धम् (ऋ० सं० ४, ४, ३०, ३)"—"अर्यमणो न मरुतः कवन्धिनः * (ऋ० सं० ४, १, १६, ३)"—इति च निगमौ॥

(७) सलिलम् † 'सल गतौ (भू०प०)'। 'सलिकल्यनिमहि-भड़िभण्डिशण्डिपिण्डितुण्डिकुकिभूभ्य इलच् (उ०१,५४)। सलति गच्छति निम्नं देशं, गम्यते प्राणिभिरिति वा। "गौरीर्मिमाय सलिलानि तक्षति (ऋ० सं० २, ३, २२, १)"—इति निगमः॥

(८) वाः ‡। 'वृञ् वरणे (स्वा० उ०)'। स्वार्थिकोऽण् छान्दसः, तदन्तात् क्विप्, अणि लोपः हल्ङ्यादिलोपः, रेफस्य विसर्जनीयः। वृतं हि तदिन्द्रेण। तथाच श्रुतिः—'अपकामं स्यन्दमाना अवीवरत वाहिकम्'—इति। इन्द्रो दिवः शक्तिभिर्देवः तस्मादर्णमवो वृतमिति। "वार्ण पथा रथ्येव स्वानीत् (ऋ० सं० २, ५, २५, १)"—इति निगमः॥

(९) वनम् §। 'वन षण सम्भक्तौ (त० आ०)'। 'पुंसि सञ्ज्ञायां घः प्रायेण (३, ३, ११८)'। वन्यते सेव्यते वनम्। "यथा वातो यथा वनम् (ऋ० सं० ४, ४, २०, ४)"—"सोमो विश्वान्यतसा वनानि (ऋ० सं० ८, ४, १४, ५)"—इति च निगमौ॥

---

* मूलर-प्रकाशिते ऋग्वेदसंहितापुस्तके तु 'कवन्धिनः'—इति पवर्गीयमध्य-पाठः स्थितः ; परमनुपदीत-'बवयोरविशेषाद वकारः'—इत्युक्त्या देवराजमतमिदम्।

† पं० १, १। ‡ पं० १, १९, ८, २। § पु० ५ पृ०२८, पं०६।

(१०) घृतम्*। 'घृ सेचने (भू० प०)। 'अञ्जिघृसिभ्यः क्तः (उ० ३, ८६)'—इति क्त-प्रत्ययः। सेचयत्यनेन भूमिं वरुणः, सिञ्चत्यनेनेति वा। 'कृष्णं नियानं हरयः सुपर्णाः (ऋ० सं० १, २२, ८, ४७)'—इत्यत्र 'घृतमित्युदक नाम (निघ० १, १२) जिघर्त्तेः सिञ्चति-कर्मण. (निरु० ७,२४)'—इति भाष्यम्। यद्वा; 'घृ क्षरणदीप्त्योः (जु० प०)'। गत्यर्थाकर्मकेत्यादिनाऽकर्मकत्वात् कर्त्तरि क्तः (३, ४, ७२)। जिघर्त्ति क्षरति मेघात् पर्वतादिभ्यो वा, दीप्यते वा स्वया दीप्त्या। "घृतादिहुतेन पृथिवी व्युद्यते (ऋ० सं० २, ३, २२, १)"—इति निगमः॥

(११) मधु†। मेघोदरवर्त्ति सलिलं मध्वित्युच्यते। तत्र पुनर्वैद्युतात्मना दह्यमानं सत् स्वर्णेन तद्गतेनैव वायुना ध्मायमानं धमति (भू० प०)। धमतिर्गतिकर्मा (निघ० २, १४) वा ध्मन्त-र्यौति-क्षयौ निःकालने द्रष्टव्यः निर्धाम्यते निःकाल्यते हि तस्मे-घात्। यद्वा; 'मद हर्षे (दि० प०)'। अस्माद्बाहुलकादु-प्रत्ययो धान्तादेशश्च। माद्यन्ति हि तेन पीतेन प्राणिनः। यद्वा; मधु-रस्वादुत्वात् मध्वित्युच्यते। इमानि स्कन्दस्वामि-निर्वचनानि। वैयाकरणपक्षे तु 'मनज्ञाने (दि० आ०)'—इति, अस्मात् निदिति (उ० १,९) वर्त्तमाने 'फलिपाटिनमिमनिजनां गुक्पटिनाकिधतश्च (उ० १, १८)'—इत्यु-प्रत्ययो धोऽन्तादेशश्च। मन्यते अतिशयेन जनैः इति मधु। 'मननीय मधु'—इति भट्टभास्करमिश्रः। "विद्वान् मध्व उज्जभारा दृशे कम् (ऋ० सं० ७, ५, ३२, ५)" —इति निगमः॥

---

* निरु० ५, २ ७, २४ १०, १६। † निरु० ५, २. ४, ८ ८, ६ १०, ३१।

(१२) पुरीषम् *। 'पॄ पालनपूरणयोः (जु० प०)'। 'शृपॄभ्यां किच्च (उ० ४, २७)'—इति ईषन्-प्रत्ययः। 'उदोष्ठ्यपूर्वस्य (७, १, १०२)'—इति उद्रपरत्वम्। पूरयति जगत् प्रलयकाले, पूर्यतेऽनेन तड़ागादि, पालकं वा जगतः शस्योत्पत्ति-हेतुत्वात्। प्रीणातेर्वा (क्रया० उ०) बाहुलकात् कीषन्-प्रत्यय, ईकारस्योकारादेशः स च पकारात् परो द्रष्टव्यः। प्रीणाति जगत् पुरीषम्। "उद्यनर्समुद्रादुत वा पुरीषात् (ऋ० सं० २, ३, ११, १)"—इति निगमः॥

(१३) पिप्पलम्। 'पॄ पालनपुरणयोः (जु० प०)'। 'कल पूटपादिभ्यः ( ? † )'—इति कल-प्रत्यये 'उदोष्ठ्य पूर्वस्य (७, १, १०२)'—इति 'बहुलञ्छन्दसि ( ७, १, १०३ )'—इति बहुलवचनात् उत्वाभावे, बाहुलकत्वात् द्वित्वे, अभ्यासस्य उरदत्वे, 'अर्त्तिपिपर्त्योश्च (७, ४, ७७)' 'बहुलञ्छन्दसि ( ३, ४, ७८ )'—इतीत्वे, उत्तरस्य पकारस्य द्वित्वमकारलोपश्चापि। पिपर्त्तिपिप्पलम्। पुरीषेण समानार्थम्। 'अपि प्लवते'—इति नैरुक्ताः'—इति क्षीरस्वामी। प्लवतेऽपि। 'प्लुङ् गतौ (भ्व० आ०)'। गच्छत्यपि। अपिशब्दात् तिष्ठतीति च गम्यते। तथाहि—जलं नदीषु प्रवाहवत्वात् गच्छति निम्नं प्रदेशं वा। 'जलाशयादिषु तीरादिनिरुद्धत्वान्न क्वचिद् गच्छति'—इति माधवः। अपिवा प्लवतेर्गत्यर्थाद् जस्वौतिङ-प्रत्ययो बाहुलकाद् भवति, टिलोपाभावो बाहुलकादेव। पकारस्य द्वित्वमकारोपजनश्च। 'वष्टि भागुरिरल्लोप मवाप्योरुप-

---

* निरु० २, २२।

† कौमुद्यान् 'कलमुपश्च (उ० १, १०१)'—इति पाठः। तदानु 'वृषादिभ्यश्चित् (उ० १, १०६)'—इति कल-प्रत्ययेन भाव्यम्।

सर्गयोः (२,४,८२ भा०)'—इत्यपि-शब्दस्याकारलोपः, पिप्पलम् ; पृषोदरादिः । "तयोरेन्यः पिप्पलं स्वाद्वत्ति (ऋ० सं० २, ३, १८, २)"—इति निगमः ॥

(१४) चीरम् *। 'घस्लृ अदने (भू० आ०)'। 'घसेश्चिच्च (उ०४,३३)'—इति ईरन् प्रत्ययः, चकारात् किच्चेति अनुवर्त्तते†, कित्त्वात् 'गमहनजन ( ६, ४, ९८ )'—इत्युपधालोपः, 'खरि च (८, ४, ५५)'—इति चर्त्वं घकारस्य ककारः, 'शासिवसिघसीनाञ्च ( ८, ३,६० )'—इति षत्वम्। अदन्ति तदिति चीरम्। 'चर सञ्चलने (भू० प )'—इत्यस्माद् बहुलकात् डीरन्-प्रत्ययः टिलोपश्च। चरति हि तत् मेघात्। "चीरेण स्नातः कुयवस्य योषे' (ऋ० सं० १, ७, १८, ३)"—इति निगमः॥

(१५) विषम् ‡। 'विष्लृ व्याप्तौ (जु० उ०)'। 'विषेर्व्याप्तिकर्मणि (?)'—इति क-प्रत्ययः। वेवेष्टि व्याप्नोति सर्वं विषम्। यद्वा ; विपूर्वात् 'ष्णा शौचे (अदा० प०)'—इत्यस्मात् 'अन्येष्वपि दृश्यते (३, २, १०, १)'—इति जनेर्विधीयमानो ड-प्रत्ययो बाहुलकात् भवति, णकारलोपोऽपि बाहुलकादेव। विशेषेण स्नात्यनेनेति विषम्, तद्धि प्रथमं शौचसाधनम्। विपूर्वात् सचतेर्वा पूर्ववत् ड-प्रत्ययः। तद्धि स्नानपानावगाहनार्थिभिः सेव्यते। "जातं विष्वाची' अहृतं विषेण (ऋ० सं० १, ८, १६, १)"—"केशी' विश्वं केशी विषम् ( ऋ० सं० ८, ७, २४, १)"—इति च निगमौ॥

---

* निरु० २, ५।

† 'घसे किच्च'—इत्येव पाठो दृश्यते कौमुद्याम्।

‡ निरु० ११, ३२ १२, २६।

(१६) रेतः। 'रि रीङ् स्रवणे' दैवादिकः (आ०)। 'सुरिभ्यां तुट् च (उ० ४, १८७)'—इत्यसुन्-प्रत्ययो तुडागमश्च गुणः। रीयते स्रवति रेतः। यद्वा; वृष्टिलक्षणानामपां देवानां रेतस्त्वाद्रेत उच्यते तथाचोपनिषत्—'देवानां रेतो वर्षम्'—इति। "अस्मे रेतः सिञ्चतं यन्मनु र्हितम् ( ऋ० सं० ५, १, १४, २)"—"सम्राड्गर्भो भुवनस्य रेतः ( ऋ० सं० २, ३, २१, १)"—इति निगमौ॥

(१७) कशः। 'कश गतौ (भू० प०)', 'कश शब्दे (भू० प०)'। उभयोरसुन् (उ० ४, १८४)। कशति गच्छति निम्न प्रदेशम्, मेघेभ्यः पतत् शब्दं करोतीति वा कशः। "याभिर्महामतिथिग्वं कशो जुवम् (ऋ० सं० १,७,२५,४)"—इति निगमः॥

(१८) जन्म *। 'जनी प्रादुर्भावे (दि० आ०)'। 'अन्येभ्योऽपि दृश्यन्ते (३, २, ७५)'—इति मनिन्, औणादिको वा (उ०४, १४०)। जायते सृष्टिकाले स्वकारणात्। 'अग्नेरापः (तै० उ०)' —इत्युपनिषत्। जायन्ते वास्मिन् जलचारिणो मत्स्यादयः। निगमोऽन्वेषणीयः॥

(१९) वृबूकम् †। ब्रवीतेः शब्दार्थात् (अदा० उ०), भ्रंशतेर्वाधःपतनार्थात् (भू० आ०); उभाभ्यां समुदिताभ्यां वा 'उलूकादयश्च ( उ० ४, ४० )'—इति ऊक-प्रत्यये निपातनाद्रूपसिद्धिः। 'ऊक-प्रत्यये धातुद्वयस्य वृबूभावः'—इति यौगिकार्थः। क्रमेणार्थः —तद्धि विपतत् साध्याकारं शब्दं करोति, भ्रश्यति दिवोऽनावरणत्वात्; मेघेभ्यो भ्रश्यति शब्दवच्चेति "द्वा वृबूकं वहतः पुरीषम् (ऋ० सं० ७, ७, १८, ३)"—इति निगमः॥

---

* निरु० ११, २३ १२, ३१।　　　† निरु० ३, १८।

(२०) बुसम् *। विपूर्वात् स्नातेः (श्रदा० प०) 'आतश्चोपसर्गे (३, ३,१०६)'—इति क-प्रत्यये उपसर्गेकारस्योकारो बाहुलकाद् भवति, धातोर्नकारलोपोऽपि बाहुलकादेव। विशेषेण स्नात्यनेनेति बुसम् †। तद्धि प्रथमं शौचसाधनम्। भ्रंशतेर्वा घञर्थ्यचि (३, १, १३४), पृषोदरादित्वादूहनीयं रूपम्। पूर्ववदर्थः। यद्वा; 'बुस उत्सर्गे (दि० प०)'। 'गेहे कः (३, १, १४४)'—इति बाहुलकादस्मादपि भवति। बुस्यते उत्सृज्यते मैथैरिति बुसम्। "अविः स्वः कृणुते गूहते बुसम् (ऋ० सं० ७, ७, १८, ४)"—इति निगमः॥

(२१) तुग्र्या। तुजतिर्हिंसायाम् (भू० प०)। 'क्विप् च (३, २, ७६)'—इति क्विप्। तुजन्ति हिंसन्ति तम श्रौष्ण्येन जनानिति वा तुजो रश्मयः। तद्वान् तुग्रः। रोमत्वर्थीयोऽतिशायने। तुग्र आदित्यः, तत्र भवा तुग्र्या। 'भवे छन्दसि (४, ४, ११०)'—इति यत्। 'आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः'—इति मनुः (३ अ० ७६ श्लो०)। यद्वा; तुग्रशब्देन ग्रीष्म उच्यते, अतिशयेनादित्यकिरणवान् हि ग्रीष्मकालः। 'तत्र साधुः (४, ४, ९८)'—इति यत्। तुग्र्या। 'अन्त्याकाशयज्ञवरिष्ठेषु तुग्रशब्दः'—इति हृसिकारः। तत्र भवे इत्यर्थे 'तुग्राद् घन् (४, ४, ११५)'—इति घन्-प्रत्यये प्राप्ते व्यत्ययेन 'भवे छन्दसि (४,४,११०)'—इति यत्। 'तुग्र्या आपः'—'तुग्र्यमुदकम्' उभयमपि दृश्यते। 'अग्नेरापः (तै० उ०)'—इत्यपां कारणत्वेन अग्नेः श्रुतत्वात्, अग्ने र्वै धूमो

* निरु० ५, १९ ।　　　† बसयोरविशेषत्वमिव पुरस्तात् (१०६ पृ०)।

जायते, धूमादभ्रम्, अभ्राद् वृष्टिः (मु· उ० २, ५)—इति क्रमेण वा आकाशे वृष्टिलक्षणानां विद्यमानत्वात्, यद्वास्यापि 'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते। आदित्याज्जायते वृष्टिः'—इति (मनुः ३अ० ७६ श्लो०) परम्पर्येण वृष्टिहेतुत्वात्। सर्वैश्वर्यवतया वरिष्ठ इन्द्रो विवक्षितः, वृष्टिप्रदत्वाच्च; तस्मात् तत्र भव इत्येषोऽर्थः सर्वत्र यथाकथञ्चित् वक्तुं शक्यते। "आवः शर्म वृषभं तुग्र्यासु (ऋ० सं० १, ३, ३, ५)"—"उत यत्तुग्रे सचा (ऋ० सं० ६, ३, ४, ५)"—इति च निगमौ॥

(२२) बुर्बुरम्। 'पॄ पालनपूरणयोः (जु० प०)'। 'गेहे कः (३, १, १४४)'—इति बाहुलकात् कः। 'उदोष्ठ्यपूर्वस्य (७, १, १०२)'। पुरम्। वपुषः शरीरस्य पूरकं पालकं वा वपुः पुरं सत्। पृषोदरादित्वात् (६, ३, १०८) वकाराकारलोपेन पकारद्वयस्य बकारादेशो विसर्जनीयस्य रेफादेशेन बुर्बुरम्। बुर्बुरमस्मिन्नस्तीति वा मत्वर्थीयोऽकारः (५, २, १२७), बुर्बुरवत्। ॥॥॥। निगमोऽन्वेषणीयः॥

(२३) क्षेम। 'क्षि निवासगत्योः (तु० प०)', 'क्षि क्षये (भू० प० )'—इत्यस्माद्वा 'अर्त्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्यो मन् (उ० १, १३७) बाहुलकादभिधानलक्षणाद्वा। 'क्वचिदकारस्येत्संज्ञा न भवति'—इति उणादिवृत्तिः। क्षियन्ति निवसन्त्यनेन प्राणिनः, गच्छन्त्यनेन पश्यन्तमिति वा, उपरिभागेन क्षीयते वा। यद्वा; पूर्वस्माद् धातुद्वयान्मनिनि रूपसिद्धिः। 'क्षोम'—इति माधवः पठति, निगमदर्शनान्निर्णयः। 'इष्टो त्वा क्षेमाय त्वा (य० ?)'—इत्यत्र क्षेमशब्द उदकनामापि भवितुमर्हति॥

(२४) धरुणम् *। 'धृञ् धारणे (भ्वा० उ०)'। 'हेतुमति च (३, १, २६)'—इति णिच्। धारेर्णिलुक् क्युन् प्रत्ययः। धारयति जगत् धरुणम्। "पयां विसर्गे धरुणेषु तस्थौ (ऋ० सं० ७, ५, ३२, ६)"—"धीरा दच्छेकुर्धरुणेष्वारभम् (ऋ० सं० ७, २, २८, ३)"—इति निगमौ॥

(२५) सिरा †। 'सृ गतौ (भ्वा० प०)' पचाद्यचि (३, १, १३४) टाप् (४, १, ४), सरा; अकारस्येकारो व्यत्ययेन (३, १, ८५)। "इव मार्गयानं सिरासु (ऋ० सं० १, ८, २६, १)"—इति निगमः। 'सरणशीलास्वप्सु'—इति माधवभाष्यम्। 'सुरा'—इति केचित् पठन्ति। 'षुञ् अभिषवे (स्वा० उ०)'; 'अभिषवः क्लेदनम्'—इति तद्वृत्तिः। 'षु प्रसवे' भ्वादिरदादिश्च (प०)। 'सुसूधाञ्गृधिभ्यः क्रन् (उ० २, २३)'—इति क्रन्-प्रत्ययः। सुनोति क्लेदयति भूमिमिति। प्रसौति अनुजानाति सस्याद्युत्पत्तिं स्वसत्तया, सूयते वा परैर्वा स्वामिनां विनियोगाय। यद्वा; 'षुर ऐश्वर्ये' तुदादिः (प०)। सुरति ईश्वरं भवति जगत् कर्त्तुं समर्था भवतीत्यर्थः। निगमोऽन्वेषणीयः॥

(२६) अररिन्दानि। 'रा दाने (अदा० प०)'। 'आदृगमहनजनः कि-किनौ लिट् च (३, २, १७१)'—इति कि-प्रत्ययः। लिड्भावात् द्विर्वचनादिः। ररिर्दाता। ररिर्यस्य न विद्यते तदररि, अप्रत्येरदत्तमित्यर्थः। तद्ददाति 'आतोऽनुपसर्गे कः (३, २, ३)' अररिदम्। मकार उपजनः अररिन्दम्। अथवा 'कृत्यल्युटो बहुलम्

* निरु० १२, ३०। † 'सुरा' निरु० १, ७; ११।

(३, ४, ११३)'—इति कर्मणि क्तिर्भवति। रति=दत्तम्, न रति अरति=अदत्तम् पृथिव्यादिभिः; किन्तत्? सुखम्। अरतिं ददातीति पूर्ववत्। उदकेन यद्दीयते सुखादिकं तदान्यैः पृथिव्यादिभिः दातुमशक्यत्वाददत्तमित्युच्यते। "अधारयदररिन्दानि सुक्रतुः (ऋ० सं० २, २, ४, ५)"—इति निगमः। अत्र 'अदत्तदानमुदकैः' —इति माधवनिर्वचनानुक्रमणी॥

(२७) ध्वस्मन्वत्। 'ध्वंसु गतौ च (भ्वा० आ०)'। चकारादधः-पतनेऽपि। औणादिको मनिन् भावे (उ० ४, १४०)। बाहुलकादुपधा-लोपः (१, ३, १)। ध्वस्म ध्वंसनं मेघेभ्यः पर्वतादिभ्यो वा अधःपतनं निम्नप्रदेशगमनम्। जलार्थिकर्तृकं वा गमनं मस्या-स्तीति मतुप्; 'अनो नुट् च (८,२,१६)'—इति मतुपो नुडागमः, नुटो ऽसिद्धत्वात् (८, २, १) तस्य च वत्वं भवति (८, २, ८)। 'ध्वस्मन्वत् स्यात् ध्वंसनवत्'—इति माधवनिर्वचनानुक्रमणी। "सं त्वा ध्वस्मन्वदभ्येतु पाथः (ऋ० सं० ४,५,१८,२)"—इति निगमः। माधवस्तु 'समभ्येतु त्वां मदीये वर्धमानं ध्वंसनक्रियायुक्तमन्न' वचनं स्तुतणीयं सहस्रसङ्ख्याकम्'—इत्यभाषयत् *॥

(२८) जामि †। जामिर्गतिकर्मणो (निघ० २, १४) 'वसि-वपियजि (उ० ४, १२१)'—इत्यादिना विहित इञ् बाहुलकाद् भवति। जमति गच्छति निम्नं प्रदेशं, गम्यते वा जलार्थिभिः। यद्वा; 'जनी प्रादुर्भावे (दि० आ०)'। अस्मात् 'जनिघसिभ्यामिण्

* नैष पाठो यथाश्रुतः साधीयः।

† ऋ० ५, ६, ३, १। निरु० ३, ४; ६, ४, १०, १०, १६।

(उ० १२६)'—इति इण् प्रत्ययो बाहुलकाद्भकारादेशश्च दीर्घः (१, २, १)। जायतेऽस्मात् पृथिव्यादि, जायते वा स्वकारणात् 'अग्नेरापः अद्भ्यः पृथिवीति (तै० उ०)' श्रुतेः। "आमिवत्"—इत्यन्ये पठन्ति। निगमदर्शनाभावात् निर्णयः॥

(२८) आयुधानि*। 'युध सम्प्रहारे (दि० आ०)'। 'घञर्थे क-विधानम् (३, ३, ५८ वा०)'—इति कः। आयुध्यत्यनेनेत्यायुधम्। यद्वा; 'इगुपधज्ञाप्रीकिरः कः (३, १, १३५)'—इति कर्त्तरि कः। आयुध्यते सम्प्रहरति रक्षांसि। ततः आयुधानि। "इन्द्रे सन्तिष्ठ जनयायुधानि (ऋ० सं० ७, ४, ८, २)"—"आमि ब्रुवाण आयुधानि वेति (ऋ० सं० ७, ६, ४, २)"—इति च निगमौ॥

(३०) चपः। 'चप प्रेरणे (चु० प०)'। कथादिष्वपठितोऽपि 'बहुलमेतन्निदर्शनम् (चु० ग० सू०)'—इत्यस्योदाहरणत्वेन† धातुवृत्तौ पठ्यते। अकृति णिलोपः। चिपयति प्रेरयति नाशयति पिपासाम्। "चपो जिन्वन्त पृषतीभिर्ऋष्टिभिः (ऋ० सं० १, ५, ७, ३)"—इति निगमः॥

(३१) अहिः‡। मेघनामसु निरुक्तम् (१, १०)। गच्छन्ति निम्नं प्रदेशम्, आभिमुख्येन हन्ति तापम्, अहिंसकं वा प्राणिनाम्। "पृथिव्या निम्नगा अहिम् (ऋ० सं० १, ५, २८, १)"

---

* निरु० १०, ६।

† कथादिचुरादिगणस्थेषु, चप मर्य एतदन्त्या धातव पठिता।

‡ पु० १०। पृ० ७४ प० ११।

—इत्यत्र 'भ्रश प्रुतगतौ (भू० प०), अन्तर्णीतण्यर्थः, निर्गमभूमौ यातनमुच्यते, अद्रिम् मेघं व्रजमित्यर्थः'—इति स्कन्दस्वामिभाष्यम्। उदकं भवितुमर्हति। अन्वेषणीयो निगमः॥

(३२) अक्षरम् *। निरुक्तं वाङ्नामसु (१, ११)। व्याप्नोति जगत्, अश्यते भुज्यते वा प्राणिभिः, अनक्ति सेचयति भूमिं वा, न क्षरति चीयते कदाचिदपीति वा। "ततः क्षरत्यक्षरम् (ऋ० सं० २, ३, २२, २)"—इति निगमः॥

(३३) स्रोतः। 'स्रु गतौ (भू० प०)'। 'स्रुरीभ्यां तुट् च (उ० ४, १८७)'—इत्यसुन्। स्रवति निम्नं देशम्। "धन्वन् स्रोतः कृणुते गातु भूमिम् (ऋ० सं० १, ७, २, ५)"—इति निगमः॥

(३४) तृप्तिः। 'तृप् प्रेरणे (दि० प०)'। क्तिन्। यद्वा; 'क्तिच्क्तौ च सञ्ज्ञायाम् (३, ३, १७४)'—इति क्तिच्। तृप्यन्ति हि देवतास्तेन तर्पिताः, तृप्यन्ति तेन पीतेन प्राणिन इति वा। तथाच श्रुतिः—'मन्थे भेजानो अमृतस्य तर्हि हिरण्यवर्णा अतृपं यदा वः' (अथ० सं० ३, १३, ६)। निगमोऽन्वेषणीयः॥

(३५) रसः †। रसतिः शब्दार्थः ( भू० प० )। पचाद्यच् (३, १, १३४)। रसति हि तत्तोयपर्वतादिभ्यः पतत्। यद्वा; 'रस आस्वादने (चु० प० अ०)'। 'पुंसि सञ्ज्ञायां घः (३,३,११८)'। रस्यते आस्वाद्यते जिह्वया लिह्यते इति रसः। यद्वा; रसोऽपां गुणः ‡, गुणगुणिनोरभेदोपचारेणाख्यायते; मत्वर्थीयस्य लुग् वा रसवान् रसः। यद्वा; रसतिरर्चतिकर्मा (३, १४), पचाद्यच् (३,

* पृ० ११। पं० १८ प० १। † पृ० ११। पं० ८० प० ८।
‡ 'आपश्चन्द्रमसा रसेन'—इति नि० प० ९. ६।

१,१२४) ; अर्चति देवतात्वात्, अर्च्यतेऽनेन देवता इति वा। "आ त्वा विशन्त्विन्दवः (ऋ० सं० ६, ६, १८, २)"—इति निगमः॥

(२६) उदकम् *। 'उदकञ्च (उ० २, ३६)'—इत्युणादिसूत्रेण उदकशब्दो निपात्यते। क्वुन्-प्रत्यये खनतेरुत्पूर्वस्य धातुलोपः। उत्खायते तद् वायुना विभज्यमानं कर्म, उत्खनति वा भूमिं स्वेन वेगेन कर्त्ता। उत्पूर्वस्य वाञ्चतेर्लोपः उदकमिति; उदञ्चतीत्युदकम्। "उदानिषुर्महीरिति तस्मादुदकमुच्यते (अथ० सं० ३, १३, ४)"—इति, "समानमेतदुदकम् (ऋ० सं० २, ३, २३,५)"—इति, "मण्डूका इवोदकान् (ऋ० सं० ८, ८, २४, ५)"—इति, "मण्डूका उदकादिव (ऋ० सं० ८, ८, २४,५)"—इति च निगमाः।

(२७) प्रयः †। 'प्रीञ् तर्पणे (क्र्या० प०)'। असुन् (उ० ४, १८४)। तृप्यन्तेऽनेन देवताः। यद्वा ; प्रपूर्वात् यमते (भ्वा० प० ) रसुनि टिलोपो बाहुलकात्। प्रकर्षेण गच्छन्ति प्रयः। "आपो न द्वीपं दधति प्रयांसि (ऋ० सं० २, ४, ८, ३ )"—इति निगमः॥

(२८) सरः ‡। 'सृ गतौ (भ्वा० प०)'। असुन् (उ० ४, १८४)। सरति स्रियते वा सरः। "साकं सरांसि त्रिंशतम् (ऋ० सं० ६, ५, २८, ४)"—इति निगमः॥

(२९) भेषजम् §। 'भिषज् चिकित्सायाम्' कण्ड्वादिः (प०)। पुंसि सञ्ज्ञायां घः (३, ३, ११८)। भिषज्यन्त्यनेन भेषजम्, 'अन-

* निरु० २, २४। † प० ९ ०। ‡ पु० ११। इ० १०० प० ९०।
§ प० ३, ६। निरु० १०, ७, ११।

न्तावसथेतिह भेषजात्'—इति निर्देशात् साधु। "आप इद्वा उ भेषजीरापो (ऋ० सं० ८, ७, २५, ६)"—इति श्रुतिः। 'भिषं रोगं जयति'—इति दुर्गः। यद्वा; भेषजमस्मिन्नस्तीति भेषजम्। अर्श आदित्वादच् (५, २, १२७)। तथा "अप्सु मे सोमो अब्रवीदन्तर्विश्वानि भेषजा (ऋ० सं० १, २, ११, ५)"-इति श्रुतिः। निगमोऽन्वेषणीयः॥

(४०) सहः *। सहिरभिभवार्थः (दि० प०), अभिभवते उष्णमग्निं वा। यद्वा; सहो बलं (निघ० २, ८), तदस्यास्तीति मत्वर्थीयस्य लुक् (१, ४, १८ वा०)। बलवत् हि बलम्। "सहदानुं पुरुहूत क्षियन्तं (ऋ० सं० ३, २, ३, २)"—इति निगमः। सकारलोपश्छान्दसः॥

(४१) शवः †। 'टु ओ श्वि गतिवृद्ध्योः (भू० प०)'। 'श्वेः सम्प्रसारणञ्च (उ० ४,१८८)'—इत्यसुन्। श्वयति गच्छति वर्द्धते वा वर्षाकाले। शवतिर्वा गतिकर्मणः (निघ० २, १४) असुन्। शवति गच्छति शवः। निगमोऽन्वेषणीयः। माधवेन स्वीये नामनिघण्टौ 'शवः'—इत्येतन्नापाठि, 'शिवम्'–'शापम्' इत्येते पठिते। द्वितीयमाशस्ताशिवास्तु मातृषु प्रतीपं शपत्तयो वदन्ति। शिवमिति सनिगमं दृष्टमपि भाषायामपि जलपर्यायत्वात् अत्र तत्पर्यायेन तस्य पाठे प्रयोजनं मन्दम्, शापमित्येतत्त्वत्यन्ताप्रसिद्धम् प्रायः पूर्वाचार्यैः समाम्नाये अपठितम्। अस्य च उदकनामत्वेनाप्रसिद्धत्वात्, शवस्य

* प० २, ९। निरु० ४, २४. ११, ९।

† प० २, ९। निरु० १०, २८; ११. ११, २१, २४. १९, २१।

ओजः सहः इत्याभ्यां सह प्रसिद्धपाठेऽस्य दृष्टत्वात्, प्रायोऽक्षरसाम्याच्च लेखकैः प्रायेण अव इति लिखितमिति । अपन्त्यनेनेति आपम् । 'अकर्त्तरि च कारके सञ्ज्ञायाम् (३, ३, १९)'—इति घञ् । हस्ते ह्युदक मादाय अपन्ति मुनय इति श्रूयते ॥

(४२) यहः *। यातं प्राप्तं पिपासितैः, हुतं च यज्ञे देवतात्वात् । असुनि यातेर्ह्वयतेश्च द्विधातुजं रूपम्; पृषोदरादिः । (६, ३, १०९) निगमोऽन्वेषणीयः ॥

(४३) ओजः †। 'उब्ज आर्जवे (तु० प०)' । 'उब्जेर्बलोपश्च (उ० ४, १८७'—इत्यसुन्, बाहुलकादुदकेऽपि भवति । उब्जते ऋजूक्रियते न्यग्भावार्थेन । उक्षतेर्वा नैरुक्तधातोर्वृद्धिकर्मणोऽसुन् प्रत्ययः । उक्षत्यनेनेत्युक्तं । न्यग्भावयति वा स्ववेगेनानतप्रदेशं, वर्द्धते वा वर्षासु बलवद्वा । निगमोऽन्वेषणीयः ॥

(४४) सुखम् ‡। सुखावहत्वात् सुखम् । 'सुखं कस्मात् ? सुहितं खेभ्यः (निरु० ३,१३)'—इति भाष्ये स्कन्दस्वामी । सुष्ठु हितं खेभ्यः । नेयं हितयोगलक्षणा चतुर्थी (१,४,४४ वा०), इन्द्रियाणामचेतनत्वात् सुखादिभिरसम्बन्धात्; अत इयं हेतौ पञ्चमी (२, ३,२५), इन्द्रियविषयसन्निकर्षस्य सुखहेतुत्वात् उपपद्यते इन्द्रियाणां हेत्वर्थकयथाश्रुतसम्बन्धानुपपत्तेश्च सम्बन्धयोगपदार्थान्तराध्याहारः । अतिशयेन हितं पुरुषस्य, खेभ्यः ख-हेतुकमित्यर्थः । हितं वा पुरुषे आत्मधर्मत्वात् सुखादीनां धर्माधिकरणत्वाच्च धर्मिणाम् । अथवा खेभ्य इति चतुर्थ्येव; ख-शब्देन च आत्मा मनसा संयुज्यते

---

* प० ५, २ । † प० ५, २ । निरु० ६, ८ । ‡ निरु० ३, १३ ।

अत्र इन्द्रियेणेति सम्बन्धिसम्बन्धात् पुरुष एवोच्यते इति यथाश्रुत-सम्बन्धः। तथाचोपनिषत्–'वर्ण्यः स एष इह प्रविष्ट आनखाग्रेभ्यो यथा क्षुरः'। क्षुरधाने अव्यवहितं स्यादित्युपलक्ष्य प्राणास्ते च प्राणानां भवतीति प्राणादिशब्दैस्तस्योहसिद्धं दर्शयति—'खं पुनः खनतेः (निरु० ३, २१)', उत्पूर्वस्य उत्खनति विनाशयति, किम्? परब्रह्मप्राप्तिसुखम्, कथम्? कायसुखप्रवृत्तेरधोगमनात् इति सुखम्। निगमोऽन्वेषणीयः॥

(४५) क्षत्रम् *। 'क्षदिः सौत्रः'। 'क्षद स्थैर्ये' इति स्कन्दस्वामी। माधवपक्षे क्षदिः शकलीकरणार्थो हिंसार्थश्च। 'क्षद गति-हिंसनयोः'—इति सुबोधिनीकारः†। गुधृवीपचिवचियमि [सदि] क्षदिभ्यस्त्रः (उ० ४, १६२)'। वर्षाव्यतिरिक्तेषु ऋतुषु सूर्य-रश्मिभिराहृता आपो मेघेषु घनीभूताः पाषाणवत् स्थिरा भवन्ति; जलाशयं प्राप्य वा; अश्नुते भुज्यते वा; अतिपीतं श्लेष्मादि जन-यित्वा प्राणिनो छिनत्ति वा; गच्छति निम्नं गम्यते वा तदर्थिभिः। यद्वा; क्षत्रशब्दो बलनाम। अर्श आद्यच् (५, २, १२७)। बलवद्धि जलम्। धननाम वा ( निघ० २, १० ), तद्धेतुत्वात्ताच्छब्द्यम्। क्षतादवृष्टिकृतक्लेशात् त्रायन्ते इति वा क्षत-शब्दात् त्रायतेश्च क्षत्रम्, पृषोदरादिः (६, ३, १०९)। "युवं नो येषु वरुण क्षत्रम् (ऋ० सं० ४, ४, २, ६)"। इहच बल मदं चेति माधवभाष्यम्। "उत द्यावापृथिवी क्षत्रमुरु (ऋ० सं० ४, ८, ८, ३)"—इत्यत्र च क्षत्रं धनमिति इष्टम्। उभयमप्युदकं भवितुमर्हति॥

---

* पं० २, १०।

† क्षद संवरणेऽपि इतो बोपदेवीयकविकल्पद्रुमे, यतो भवति क्षत्रेति।

(४६) आवयाः। आङ् पूर्वात् 'वी गतिव्याप्तिप्रजनकान्त्यसनखादनेषु (अदा॰ प॰)'—इत्यस्मात् 'इणश्रासिः (उ॰ ४, २१६)' —इति बाहुलकादासि-प्रत्ययः। उपसर्गश्च धात्वर्थानुवर्त्तकः अभिमुख्यार्थो वा ; अश्यते वीयते आभिमुख्येन गम्यते इति वा आवयाः निगमोऽन्वेषणीयः॥

(४७) शुभम्। 'शुभ दीप्तौ (भू॰ आ॰)'। क्विप् प्रत्ययः। शोभते दीप्यते स्वेन तेजसा देवतात्वात्। द्वितीयैकवचनस्य प्रयोगो यथादृष्टम्। "शुभं पृचमिषमूर्जं वहन्त (५, १, १, ४)"—"इयं जनाय वहयः शुभस्पती: (७, ८, १८, ४)"—"द्युवत्याणी शुभस्पती (१, १, ५, १)"—इति च निगमाः॥

(४८) यादुः। 'या प्रापणे (अदा॰ प॰)'। 'भृ-मृशीङ्तृचरित्सरितनिधनिमस्जिभ्य उः (उ॰ १, ७)'—इति बाहुलकादुप्रत्ययो दुडागमश्च। याति निम्नं प्रदेशं यादुः। 'यादुः स्याद् गमनक्रियम्'—इति माधवः। तदानीमु-प्रत्ययो बाहुलकात्। "ददाति मह्यं यादुरी"—(ऋ॰ सं॰ २, १, ११, ६) इत्यत्र स्कन्दस्वामी—'यादुरित्युदकनाम, रोमत्वर्थीयः'—इति॥

(४९) भूतम्। 'भू सत्तायाम् (भू॰ प॰)', निष्ठातकारः कर्त्तरि। पूर्वमेव सत् भूतम् प्रथमदृष्टत्वात्। 'अपएव ससर्जादौ तासु बीजमवासृजत् (१अ॰ ८ श्लो॰)'—इति मनुः। अथवा 'भू प्राप्तौ (चु॰ आ॰)'—इति धातुः। प्राप्यं पिपासितैः। यद्वा; पञ्चसु पृथिव्यादिषु महाभूतेष्वन्तर्भावात् भूतमित्युच्यते। 'सातात्मदित्वं निर्मीयन्ते अस्मिन् भूतानि (२, ८)'—इति निरुक्तं एवोदाहरणम्। निगमोऽन्वेषणीयः॥

(५०) भुवनम् *। 'भू सत्तायाम् (भू० प०)'। 'भूसूधूभ्रस्जिभ्यश्छन्दसि (उ० २, ७५)'—इति क्युन्-प्रत्ययः, उवङादेशः। भवन्त्यनेन सर्वे पदार्था इति भुवनम्। "य इमा विश्वा भुवनानि जुह्वत् ( ऋ० सं० ८, ३, १६, १ )"—"इमा च विश्वा भुवनान्यस्य (ऋ० सं० ३, ३, ३१, ४)"—इति च निगमौ ॥

(५१) भविष्यत्। भवतेरेव। 'लृट् शेषे च (३, ३, १३)' —इति लृट्, 'लृटः सद्वा (३, ३, १४), 'स्यतासी लृलुटोः (३, १, ३३)', इडागमः (७,२,३५)। जलं हि आगामिन्यपि काले विद्यते, प्रलयेऽपि जलत्वस्य नाशाभावात्। निगमोऽन्वेषणीयः ॥

(५२) महत् †। 'मह पूजायाम्' भ्वादिः (प०), कथादिश्च (चु० उ०)। अस्मात् 'वर्त्तमाने पृषन्महद्बृहज्जगच्छतृवच्च (उ० २, ७८)'—इति निपातनम्। महति महयति वा देवता अनेन पूज्यत इति महत्, मह्यते वा देवतात्वात्। यद्वा; मानेन स्वगतेन परिमाणेन अन्यान् स्वस्मादूनप्रमाणान् पदार्थान् जहाति अतिक्रामति 'दशोत्तराण्यावरणानि सप्त'—इत्यत्र विष्णुपुराणे सर्वमहत्त्वं जलतत्त्वस्योक्तम्। मानशब्दाज्जहातेः, पृषोदरादित्वाद्रूपसिद्धिः। "महत्त उल्बं स्थविरं तदासीत् ( ऋ० सं० ८, १, १०, १)"—इति निगमः ॥

(५३) आपः ‡। एतदुक्तसमानार्थम् । * * *। सर्वं ताभिर्हि व्याप्तम्, आप्नोतेः महत्त्व-कर्मकत्वात्। तथाचाथर्वणिका

---

* निरु० ३, १२. ७, २१. ८, १३. १०, ११ ; २१ ; ३६. १२, ११।
† प० १, २। निरु० १, ११। ‡ पु० ३ । पु० ३० प० १०.१

श्रुतिः—आपो अग्रे विश्वमावन् ( अथ० सं० ४, २, ६ )'—इति। यद्वा; कर्मणि क्विप्, इन्द्रेण आप्ता आपः, तदाप्नोतीन्द्रो वा। 'तदाप्नोदिन्द्रो वो यतीस्तस्मादापो अनु' ष्ठन (अथ० सं० ३, १३, २)'—इति श्रुतिः। "आपो हि ष्ठा मयोभुवः ( ७, ४, ५, १ )" —इति निगमः॥

(५४) व्योम*। निरुक्तमन्तरिक्षनामसु (२। पृ०२६ पं०११)। व्यवति प्राणिनः संवृणोति भूमिमिति वा। निगमोऽन्वेषणीयः॥

(५५) यशः †। 'अशू व्याप्तौ (स्वा० आ०)'—'अश भोजने (क्र्या० प०)'। 'अशेर्देवने युट् च (उ० ४, १८६)'—इत्येतस्माद् बाहुलकादुदकेऽपि भवति। 'अशेर्युट् च'—इत्येव श्रोभोजदेवः। अश्नुते व्याप्नोति जगत्, अश्यते वा प्राणिभिः। "तिर्यग् बिलश्चमस ऊर्ध्वबुध्नो यस्मिन् यशो निहितं विश्वरूपम्। अत्रासत ऋषयः सप्त साकं ये अस्य गोपा महतो बभूवुः (अथ० सं० १०, २६, ८)" —इति निगमः॥

(५६) महः। महदित्यनेन समानम्। अचासुन् प्रत्ययः (उ० ४, १८४)। "मह्ना जिगीषिं मध्विनि ( ऋ० सं० ४, ४, २८, १)"—इति निगमः। 'महो अर्ण (ऋ० सं० १, १, ६, ३. निरु० ११, २७ )'—इत्यत्र 'मह उदकनाम'-इति स्कन्दस्वामी। "महोभ्यः स्वाहा ( ? )"—इति च॥

(५७) सर्णीकम्। 'सृ गतौ (भ्वा० प०)'। 'सर्तेर्नुम् च (उ० ४, २३)'—इतीकन् प्रत्ययः। अधिकृतं कित्त्वम् बाहुलकान्न भवति,

---

* पृ० ११ पं० २८ पं० १०।                    † पं० ३, ७, १०।

शुणः, धावति सर्त्तीकम्। "सलिलाय त्वा सर्त्तीकाय त्वा सतीकाय त्वा ( ? )"—इति निगमः॥

(५८) स्तृतीकम्। 'स्तृ शब्दोपतापयो (भू० प०)', स्वरतिर्गत्यर्थः (निघ० २, १४), अर्चतिकर्मा च (निघ० ३, १४)। 'अलीकादयश्च (उ० ४, २५)'—इतीकन्-प्रत्ययान्तेषु द्रष्टव्यः, निपातनात्तुगागमः। शब्दं करोति, गच्छति, पूज्यन्तेऽनेन देवताः, पूज्यते वा स्वयं देवतात्वात् इति स्तृतीकम्। निगमोऽन्वेषणीयः॥ "सतीकम्"—इति केचित् पठन्ति। 'षद्लृ विशरणगत्यवसादनेषु (भू० तु० प०)'—पूर्ववदीकन् (उ० ४, २५) ; दकारस्य तकारः। गच्छति अवसीदति कुल्यानि, अनेनेति वा। "सतीकाय त्वा ( ? )"—इति पूर्वमुक्तो निगमः। अत्र स शब्देऽवग्रहकरणं पदकाराणामभिप्रायस्य वैचित्र्यात् *॥

(५९) सतीनम्। पूर्ववत् सर्वम् ; दकारस्य तकारोऽपि निपातनात्। यद्वा ; सती शोभना असौ ; सामर्थ्यान्माध्यमिका वाक्, सा ईना ईश्वरा अस्य तत् सतीनम् ; 'सञ्ज्ञापूरण्योश्च (६, ३, ३८)'—इति पुम्वद्भावनिषेधः। "अयो' सतीन कंइतः (ऋ० सं० २, ५, १४, १)"—इति निगमः। "सतीन मत्वाहव्यो भरेषु (ऋ० सं० १, ७, ८, १)"—इति च॥

(६०) गहनम् †। 'गाहू विलोड़ने (भू० आ०)'। 'युच् बहुलम् (उ० २, ७४)'—इति युच् प्रत्यय, बहुलवचनाद्ध्रस्वत्वम्। अवगाह्यते प्राणिभिः गहनम्। "अभः किमासीद् गहनं गभीरम्

---

* पदकारैस्तु हि 'स। तीकाय' एवमवग्रहीतम्। † प० १८. ६, ६।

(ऋ० सं० ८, ७, १७, १)"—इति निगमः। अत्राभ्रः गभीर-मित्येति निरुक्त्या योजनीये॥

(६१) गभीरम्*। गमेर्धातोः 'गभीरगम्भीरौ (उ० ४,२४)'—इति नुगागम ईरन्-प्रत्ययो मकारलोपश्च निपात्यते। गच्छति ग्रहेष्वाहृतं वसतीवर्यादिरूपेण। "पर्वि दीने गंभीर आँ (ऋ० सं० ६, ४, ५३, १)"—"न तं घ्नन्ति स्रवतो गभीराः (ऋ० सं० ८, ६, ५, ४)"—इति च निगमौ॥

(६२) गम्भरम्। 'कदरादयश्च (उ० ५, ४२)'—इत्वर-प्रत्ययान्तेषु द्रष्टव्यः। निपातनाद् गमेरन् भडागमश्च। पूर्ववदर्थः। यद्वा; 'ग्रह उपादाने (क्र्या०उ०)', पूर्ववदरन्, 'हृग्रहोर्भश्छन्दसि' (सि० कौ० वै० ३ अ०)। रेफस्य मकारो बाहुलकात् स चाकारात् परः। गृह्यते वसतीवर्यादित्वेन। "गम्भरेषु प्रतिष्ठाम् (ऋ० सं० ८, ६, २, ४)"—इति निगमः॥

(६३) ईम्†। अव्ययमिदम्। "वि यदन्वा पर्जयनाःईं यथा (ऋ० सं० ४, ३, १४, ४)"—इति निगमः। बहुषु पाठेषु "कम्‡"—इति दृश्यते, तल्लिपिभ्रमतः। * * *। अत ईमित्येव पठितव्यम्॥

(६४) अन्नम्§। 'अन प्राणने (अदा० प०)'। 'कृवृजृसि-द्रुपन्यनिस्वपिभ्यो नित् (उ० ३, ८)'—इति न-प्रत्ययः। अन्यते प्राण्यते प्रजाभिः; न हि कदाचिदपि जलेन विना जीवन्ति प्राणिनः 'अस्य शोषादयो दोषा भवन्ति यदलाभतः। न हि

* पृ० ११। १०८४ प०२। † प० ४, २। निरु० १, ८ ४, १९ ५ २८।
‡ प० ३, ६। निरु० १, ८ १४. ५, १८ ६, २५। § निरु० २, ८।

तीयाद् विना तृप्तिः स्वस्थस्याप्यातुरस्य च"—इति वाग्भटः। भक्तेर्वा निष्ठातकारः ; भवतेर्वा इति निर्देशात् जग्ध्यादेशाभावः, भज्यते स। अन्नहेतुत्वाद्वा अन्न मित्युच्यते। "हिरण्यदा ददत्वन्नमस्मे (ऋ० सं० २, ७, २३, ५)"—इति निगमः॥

(६५) हविः। 'हु दानादानयोः (जु० प०)'। 'अर्चिशुचिहुसृपिच्छदिच्छर्दिभ्य इसिः (उ० २, १०१)'—इति इसि-प्रत्ययः। दीयते पिपासितेभ्यः, आदीयते वा जनैरुपभोगाय। अथवा हूयते देवतोद्देशेन, प्रक्षिप्यते वैश्वानरे हविरिदं जुहोमीत्यादि मन्त्रैः। "हविर्याजारो अपां पिपर्त्ति (ऋ० सं० १, ३, ३२, ४)"—"विश्वकर्मन् हविषा वावृधानः (ऋ० सं० ८, ३, १६, ६)"—इति च निगमः॥

(६६) सद्म *। (६७) सदनम् †। 'षद्लृ विशरणगत्यवसादनेषु (भू० तु० प०)'। पूर्ववत्, 'मनिन् (उ० ४, १४०)'—इति मनिन् प्रत्ययः। उत्तरत्र, 'युच् बहुलम् (उ० २, ७४)'—इति युच्। विशीर्यते शिलादिषु पातात्, विशीर्यन्तेऽनेन कुड्यादय इति वा; गच्छति वागच्छति निम्नं,गम्यते वा प्राणिभिः; अवसादयति पिपासायुक्तं वा। 'हविर्हविष्मो महि सद्म दैव्यम् (ऋ० सं० ७, ३, ८, ५)"—इति निगमः॥

(६८) ऋतम् ‡॥

(६९) योनिः §। 'यु मिश्रणे (अदा० प०)'। 'वहिश्रियुद्रु-

---

* प० २, १०. २, ४ ; २० । † निद० ४, १०. ७, २४. १२, ४९ ।
‡ प० २, १० , ११. २, ३. ४, १९. ५, ३. ६, २९. ८, ६ : १८ । निद० १०, ३० ।
§ प० २, ३ । निद० ५, ८, १८ ।

ज्ञाष्टाल्वरिभ्यो नि: (उ० ४, ५१)'—इति नि-प्रत्यय: । युतं मितं सम्पृक्तं सर्वपदार्थैः । यद्वा ; वेतेर्वकारस्य उकारः, स च ईकारा-त्पर: यणादेश:, स एव प्रत्यय: । परिवीतं हि जलं वायुना तोरेण वा । यद्वा ; योनि: कारणमन्नस्य । 'वृष्टेरन्नं ततः प्रजा: (मनु: ३, ७६)'—इति हि स्मृति: । "चरत् प्रियस्य योनिषु प्रिय: सन् (ऋ० सं० ८, ७, ७, ५)"—"त्वचं पृञ्चन्त्युपरस्य योनौ' (ऋ० सं० १, ५, २७, ३)"—इति च निगमौ ॥

(७०) ऋतस्य योनि: । यज्ञस्य योनि: ; नह्युदकेन विना कश्चिदपि यज्ञ: कर्त्तुं शक्यते, ऋतस्य आगामिनो वर्षजलस्य योनिर्वा,—आदित्यो भौमं रसं रश्मिनादत्ते पुनर्वर्षाकाले वर्षति ; तथा—'सहस्रगुणमुत्स्रष्टुमादत्ते हि रसं रवि:'—इत्युक्तम् । 'अस्य योनिर्भवति'— इति माधव: । "ऋतस्य योनि मा सद: (ऋ० सं० ४, १, १३, ४)"—"ऋतस्य योनागर्भे सुजातम् ( ऋ० सं० १, ५, ८, २)"—इति निगमौ ॥

(७१) सत्यम् * । सत्सु भवम् 'भवेच्छन्दसि (४, ४, ११०)' —इति यत् । यद्वा ; सत्सु साधु: 'तत्र साधु: (४, ४, ८८)'—इति यत् । सतोऽर्हमिति वा 'छन्दसि च (५, १, ६७)'—इति य: । "विद्युदसिविद्यामयाह्वानभृतात्सत्यमुपैति ( ? )"—"ऋतात् सत्य मुपागात् ( ? )"—इति च निगमौ ॥

(७२) नीरम् † । 'णीञ् प्रापणे (भू० उ०)' । 'स्फायितञ्चि-वञ्चिशक्ति (उ० २, १२)'—इत्यादिना रन्-प्रत्यय. । नयति प्राप-

---

* प० ३, १० । निरु० १, १२. ३, १३ ।          † प० ३, ४ ।

विवक्ष्यते। भोजनमपि व्रतं क्षुधादिनिवारणात्। वृणोतेर्धातोः (स्वा० उ०) 'पृषिरञ्जिभ्यां कित् (उ० ३, १०८)'—इति विधीयमानोऽतच्-प्रत्ययो बाहुलकाद् भवति कित्वाद् गुणाभावः, यणादेशः। 'वारयतेर्वा तत्'—इत्यत्र लुगिति लुगपि बाहुलकात्। 'व्रतेः'—इति श्रीभोजदेवः'—इति क्षीरस्वामी। व्रत्यते वर्ज्यते सर्वभोगोऽत्रेति सुबोधिनीकारः। व्रतेर्धातोः 'पुंसि सञ्ज्ञायां घः प्रायेण (३, ३, ११८)'—इति घ-प्रत्ययः। व्रतिश्च वर्जनार्थः। "अर्था वयसादित्यव्रते तव (ऋ० सं० १, २, १५, ५)"—"ब्राह्मणा व्रतचारिणः (ऋ० सं० ५, ७, ३, १)"—इति च निगमौ। "अग्ने व्रतपते व्रतं चरिष्यामि (य० वा० सं० १, ५)"—इत्यादौ व्रतशब्दे निवृत्तिकर्मता ॥

(८) कर्वरम्। कर्वतेर्धातोः (भू० प०) 'पुंसि सञ्ज्ञायां घः प्रायेण (३, ३, ११८)'—इति घ-प्रत्ययः; कर्वरम्। 'कॄ विक्षेपे (तुदा० प०)', 'कॄञ् हिंसायाम् (स्वा० उ०)'। 'कॄगॄशॄवृञ्चतिभ्यः ष्वरच् (उ० २, ११४)'। किरति फलं, कीर्यतेऽस्मिन् पाचादीति वा; हिनस्ति तत् शुभं पुरुषभावमशुभं पुण्यम्। "अतंद्रनोपि कर्वरा पुरूणि (ऋ० सं० ८, ७, २, २)"—इति निगमः ॥

(९) शक्म। 'शक्लृ शक्तौ (दि० उ०)'। 'अशिशकिभ्यां छन्दसि (उ० ४,१४२)'—इति मनिन्-प्रत्ययः। शक्यते अनेनाभिमतं प्राप्तुं, शक्नोतीष्टं साधयितुं वा, शक्यते कर्तुमिति वा। "मध्याकर्तोर्विततं सञ्जभार शक्म धीरः ( ऋ० सं० २, ८, २, ४ )"—इति निगम. ॥

(१०) क्रतुः *। करोतेः (भू० उ०) 'कृञः कतुः (उ० १,७४)—इति कतु-प्रत्ययः। क्रियते द्विजातिभिः। "क्रतुं दधिक्रा अनु संतवीत्वत् (ऋ० सं० ३, ७, १४, ४)"—"शतक्रतो मादयस्वा सुतेषु (ऋ० सं० ४, ७, १३, ५)"—इति च निगमौ॥

(११) करुणम्। 'कृ विक्षेपे (तुदा० प०)', 'कृञ् हिंसायाम् (स्वा० उ०)'। 'कृवृदारिभ्य उनन् (उ० ३, ५०)'। कर्वरेण समानार्थम्। "स विश्वस्य करुणस्येश एकः (ऋ० सं० १, ७, ८, २)"—इति निगमः॥

(१२) करणानि। करोतेः 'युच् बहुलम् (उ० २, ७४)'—इति युच् क्रियते ल्युट् वा। करणं साधनमिति प्राप्ते जपि पाठो यथादृष्टम्। 'कर्मवाचि करण माद्युदात्तम्'—इति माधवः। "प्र ते पूर्वाणि करणानि वोचम् ( ऋ० सं० ४, १, ३०, १ )"—"प्र ते पूर्वाणि करणानि विप्र (ऋ० सं० ३, ६, २, ५)"—इति च निगमौ॥

(१३) करांसि। करोतेरसुन् (उ० ४, १८४)। 'भूतेऽपि दृश्यन्ते (३, ३, २)'—इति भूते वा भविष्यति वा। अर्थः पूर्ववत्। 'करांसीति कृतानि स्युः क्रियमाणानि केचन'—इति माधवः। "आविद्वाँ आह विदुषे करांसि (ऋ० सं० ३, ६, २, ५)"—इति निगमः॥

(१४) करस्नौ †। 'कृञ् करणे' भूवादिः (उ०)। शतरि ङीप्। करणमभिमतं कर्त्तुः। यथादृष्टं पाठः। निगमोऽन्वेषणीयः ‡॥

---

* प० ३, ८। निरु० ३, २८. १०, १०।  † "करस्नि" निरु० ३, १०।

‡ ऋ० सं० ८, १, ६, २. द्रष्टव्य. "करस्नि"।

(१५) करिक्रत् । 'दाधर्त्ति दर्धर्त्ति दर्द्धर्षि (७, ४, ६५)'—इत्यादि सूत्रेण छन्दोविषयेण करोतेर्यङ्लुगन्तस्य शतरि नुमत्वाभावो ऽभ्यासस्य रिगागमोऽपि निपात्यते । अत्र न्यासः—'यणादेशे कृते अनृकारान्तत्वादङ्गस्याभ्यासस्य रिगागमो न प्राप्नोतीति सोऽपि निपात्यत इति । पुन पुनः करोतीष्टप्राप्तिमनिवारश्च । निगमोऽन्वेषणीयः * ॥

(१६) चक्रत् । 'डुकृञ् करणे' भूवादिः (उ०) । शतृ । 'जुहोत्यादिभ्यः श्लुः (२, ४, ७५)'—'बहुलञ्छन्दसि (२, ४, ७६)'—इति शपः श्लुर्द्विर्वचनादिः यणादेशः । करोत्यभीष्टम् । निगमोऽन्वेषणीयः ॥ केषुचित् कोशेषु चक्रतुरिति दृष्टम् , निगमदर्शनान्निर्णयः । अस्य स्थाने चर्कृत्यमिति माधवीये दृष्टम् । "चर्कृत्यानि क्रण्वतः (ऋ० सं० २, ६, ७, १३)"—इत्यत्र 'कर्माणि चर्कृत्यानि' —इति भाष्यञ्च † ॥

(१७) कर्त्वम् । करोतेः 'अन्येभ्योऽपि दृश्यन्ते (३, २, ७५)' —इति वन्-प्रत्ययः क्रियते । यद्वा ; 'कृत्यार्थे तवैकेकेन्यत्वनः (३, ४, १४)'—इति त्वन् प्रत्ययः, कृत्यार्थत्वं भावकर्म । "तद्देवानां देवतमाय कर्त्वम् (ऋ० सं० २, ७, १, २)"—इति निगमः । अत्र स्कन्दस्वामि-भाष्यम्—'कर्त्वमिति कर्मनाम'—इति ॥

(१८) कर्त्तोः । करोतेः 'सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुन् (उ० १, ६७)—इति बाहुलकात् तुन्-प्रत्ययः । अर्थः

---

* ऋ० सं० २, १, १८, ४. द्रष्टव्य ।

† नैतत् सायणीयम् । तत्र तु 'चर्कृत्यानि कर्तव्यानि कर्माणि'—इत्येवमस्ति ।

पूर्ववत्। षष्ठ्येकवचनस्य पाठो यथादृष्टम्। "मध्याकर्त्तोर्विततं सञ्जभार (ऋ० सं० १, ८, ७, ४)"—"मध्याकर्त्तोर्न्यधाच्छ्रुक्मधीरः (ऋ० सं० २, ८, २, ४)"—इति च निगमौ॥

(१९) कर्त्तवे। करोतेः 'कृत्यार्थे तवैकेन्यत्वनः (३, ४, १४)'—इति तवे-प्रत्ययः। 'कृन्मेजन्तः (१, १, ३९)'—इत्यव्ययत्वम्। निगमोऽन्वेषणीयः *॥

(२०) कत्वी †। करोतेः 'यः किच (उ० १, ६८)'—इति विधीयमानस्तु-प्रत्ययो बाहुलकाद् भवति। क्रियते क्रतु। 'शिल्पायन्ये क्रतुर्यकम् ( ? )'—इत्यत्र माधवेनापि कर्मनामसु पठितः। 'सुपां सुलुक् ( ७, १, ३९ )'—इत्यत्र 'इयाडियाजीकाराणामुपसङ्ख्यानम् (७, १, ३९ वा०)'—इति विभक्तेः रीकारादेशः। "त्वं रथ मेतशं कृत्व्ये धने (ऋ० सं० १, ४, १८, १)"—इति निगमः। अत्र स्कन्दस्वामि-भाष्यम्—'कृत्वीति कर्मनाम, कर्मणि धने निमित्ते धनार्थं यत् कर्मेत्यर्थः। कर्माच संग्रामः सङ्ग्रामार्थमाजिः स्यात्'—इति। 'कृत्वी सर्वणामददर्विवस्वते (ऋ० सं० ७, ६, २३, २)'—इत्यत्र तु त्वान्तं तथा स्कन्दस्वामिना व्याख्यातत्वात्॥

(२१) धीः ‡। 'धृञ् आधारे' दिवादिः (उ०)। धारयति कर्त्तारं फलप्रदानेन। यद्वा; दधातेः क्विपि 'घुमास्थागापाजहातिसां हलि (६, ४, ६६)'—इतीत्वे रूपम्। ईत्वञ्च क्विप्यपि * * *। धारयति कर्त्तारमिति पूर्ववद् ददाति वा फलं धीः कर्म।

* "कर्त्तवे" ऋ० मं० १, ६, १०, २. इत्यादिः। † निरु० १२, १०।

‡ प० २, ८। निरु० ११, २९. १२, १८; ३०।

'दधातेर्निहितं द्रव्येषु तत्'—इति माधवः। यद्वा; ध्यायतेः सम्प्रसारणत्वे क्विपि रूपम्। ध्यायते चिन्त्यते कर्तृभिरेवं कर्त्तव्यमिति। "धियं धियं सीषधाति प्र पूषा (ऋ० सं० ४, ८, ६,३)" —इति निगमः॥

(२२) शचीः*। 'शच व्यक्तायां वाचि' भ्वादिरात्मनेपदी। 'इन् सर्वधातुभ्यः (उ० ४, ११४)'। 'कृदिकारात् (४, १, ४ वा०)' —इति ङीष्। शचन्ते व्यक्ता वाचः कुर्वन्त्यस्यामिति शची। क्षीरस्वामी तु—'शचति शची; शच श्वच गतौ'—इति व्याख्यत्। गत्यर्थः शचिर्धातुपाठे न दृष्टः। "यद्द्देवयन्त सर्वथः शचीभिः (ऋ० सं० ५, ५, १६, ४)"—इति निगमः॥

(२३) शमी †। 'शम उपशमे (दि० प०)'; अस्मात् इन्, ङीप् च पूर्ववत्। शम्यत्यनयाऽनिष्टानि। णिजन्ताद्वा पूर्ववत् इन्-ङीपौ। शमयत्यनिष्टव्याध्यादीनि। "शमीमदुर्मखस्य वा ( ऋ० सं० ६, ५, २६, ४)—इति निगमः॥

(२४) शिमी ‡। शमतेः पूर्ववन्निर्वाहोऽस्य। बाहुलकादकारस्येकारः। शक्नोतेर्वा ककारस्य मकारः, धकारस्येकारश्च। शक्नोत्यनेन समानार्थः। "धुनिः शिमीवाच्छरुमाँ ऋजीषी (ऋ० सं० ८, ४, १४, ५)"—इति निगमः॥

(२५) शक्तिः §। शक्नोतेः 'स्त्रियां क्तिन् (३, ३, ९४)'। शक्यते कर्तुं शक्यते वानया परोत्नीकं जेतुम्। "अजोजनच्छक्तिभी रोदसिप्राम् ( ऋ० सं० ८, ४, ११, ५)"—इति निगमः॥

---

* पु० ११। श० द० प० ०। † निरु० ११, १६।
‡ निरु० ३, १२। § निरु० ७, १८।

(२६) शिल्पम् *। 'शील उपधारणे' † चुरादिः (प०), 'शील समाधौ' भ्वादिः (प०)। अनयोः 'खष्पशिल्पशष्पवाष्परूपपर्पतल्पाः (उ० ३, २६)'—इति प-प्रत्यये णि-लोपे (६, ४ ५१) च उपधाया ह्रस्वत्वं निपात्यते। शीलयति शीलतीति वा शिल्पम्। 'यत् कुम्भकारादि कर्म'—इत्युणादिवृत्तिः। शीलयन्ति पुनः पुनरभ्यस्यन्ति तदिति शिल्पम्। यद्वा; शिनोति कर्त्तारं तनूकरोति दुष्करत्वेनातिक्लेशकरत्वादिति निपातनाद्रूपसिद्धिः। 'शिञ् निशाने (स्वा० उ०)' 'निशानं तनूकरणम्'—इति सुबोधिनीकारः। "यत्ते शिल्पं ‡ कश्यप रोचनावत् (अथ० सं० १३, ३, १०)"—"दिवः शिल्प मवत्तम् ( ? )"—इति च निगमौ॥

इति षड्विंशतिः कर्मनामानि॥ १॥

तुक्(१)। तोकम्(२)। तनयः(३)। तोक्म(४)। तक्म(५)। शेषः(६)। अप्नः(७)। गयः(८)। जाः(९)। अपत्यम्(१०)। यहुः(११)। सूनुः(१२)। नपात्(१३)। प्रजा(१४)। बीजम्(१५)। इति पञ्चदशापत्यनामानि §॥ २॥

(१) तुक्। 'तुज हिंसायाम् (भ्वा० प०)', क्विप्। तोजति हिनस्ति मातापितरौ गर्भवासादिना। तथाच मन्त्रः—'यदा पिपेष मातरं पितरं पुत्रः ( ? )'—इत्यादिः। 'तुजिर्गत्यर्थः प्रेर-

* प० ३, ७। † 'उपधारणमभ्यासः'—इति कौ०।
‡ "चन्द्र"—इति पैप्पलादशाखापाठः। (३) "तनयम्" ग. C. D. F. ह।
(१४) "प्रजा"— । (१५) "बीजम्" ख. nd। § इत्यपादस्य म।

चार्थय'—इति माधवः। क्विप्। गच्छत्यनेन पितृलोकं पिता, गच्छत्यनेनानृण्यं पितृभ्य इति वा, प्रेर्य्यते प्रसवकाले वायुनापि वा। यद्वा; 'ष्टुच प्रसादे (भू० आ०)'; क्विप्, पृषोदरादित्वात् सकारलोपः। प्रसादयन्त्यनेन पिता वा। "तुचे तु नो भवन्तु वरिवोविदः (ऋ० सं० ६, २, २३, ४)"—"तुचे तनाय तत्सु नो (ऋ० सं० ६, १, २८, ३)"—इति च निगमौ। उभयत्र चतुर्थी॥

(२) तोकम् *। 'तुद व्यथने (तुदा० प०)'; 'पुंसि सञ्ज्ञायां घः (३, ३, ११८)', 'पृषोदरादित्वात् दकारस्य ककारः। तुदते ऽनेन माता गर्भवासकाले, तुद्यते व्याध्यादिभिरिति वा। यद्वा; 'ष्टुच सुतौ (भू० आ०)'; 'क्रदाधारार्चिकलिभ्यः कः (उ० ३,३८)'—इति बाहुलकात् क-प्रत्ययः, स-लोपश्च सूयते तोकम्। तथाच हरिश्चन्द्रोपाख्याने "ऋणमस्मिन्सन्नयत्यमृतत्वं च गच्छति (ऐ०ब्रा० ७, ३, १)"—इत्यादिभिर्गाथाभिः प्रशस्यते पुत्रः। यद्वा; 'तु'—इति सौत्रो धातु वृद्धार्थे; क-प्रत्ययः पूर्ववत्। वर्द्धते हि तत्, वर्द्धते वा मातापितृभ्याम्। यद्वा; सर्वेभ्य एव धातुभ्यो घञि रूपम्; अर्थश्च स एव। तुदेस्तु ककारो बाहुलकात् ष्टुचेः सकारलोपश्च। "मा नस्तोकेषु तनयेषु रीरिषः (ऋ० सं० ५,४,१३,३)"—इति निगमः।

(३) तनयः †। 'तनु विस्तारे (तना० प०)'; 'वलिमलितनिभ्यः कयन् (उ० ४,८७)'—इति कयन्-प्रत्ययः। कुलं तनोति विस्तारयति। "मा नस्तोके तनये मा न आयौ (ऋ० सं० १,८, ६, ३)"—इति निगमः॥

* निरु० १०, ७ १२ १। † निरु० १०, ७ १२, १।

(४) तोक्म । तुजेः, तुचेः, तनतेः, तुद्यते वा मनिनि (उ० ४, १४०) ककारोऽन्तादेशः, तवतेः कुगागमः पृषोदरादित्वात्। निगमोऽन्वेषणीयः * ॥

(५) तक्म† । तकतेर्गतिकर्मणो (निघ० २,१४) मनिन् (उ० ४, १४०), तुचेर्गत्यर्थाद्वा मनिन् (उ० ४, १४०), अत्वमुकारस्य (६, ३, १०९)। पूर्वेण तुचा समानार्थः। निगमोऽन्वेषणीयः‡ ॥

(६) शेपः §। 'शिष सर्वोपयोगे' चुरादिर्भ्वादिश्च (प०); असुन् (उ० ४, १८४)। म्रियमाणे पितरि कुलसन्तानार्थं परिशेषयति, परिशिष्यते वा पित्रादिभिः सह न म्रियते स्वयमवतिष्ठते इत्यर्थः। यद्वा; 'शिषॢ विशेषणे' रुधादिः परस्मैपदी; असुन् (उ० ४, १८४)। विशिष्यते पित्राद्यात्मनोऽतिशयितं करोति हि विद्यादिभिः। 'पुनातु पिता प्रजा मे यतच्छ्रेयसी मात्मनः कुरुते' —इति ब्राह्मणम्। तथा 'पुत्रमेवैकमिच्छन्त्यात्मनोगुणवत्तरम्' —इति महाभारतम्। यद्वा; 'शिष हिंसार्थः' भ्वादिः परस्मैपदी, शेषति हिनस्ति मातापितरौ। 'यद्वा पिपेष'—इति मन्त्रः पूर्वमेव दर्शितः (१७८ पृ०)। "न शेपो अग्ने अन्यजातमस्ति ( ऋ० सं० ५, २, ६, २ )"—"मा शेपसा मा तनसा ( ऋ० सं० ४, ४, ८, ४)"—इति च निगमौ ॥

(७) अप्नः‖ । कर्मनामसु व्याख्यातम् (२,१.पृ०१७१ प०१) बाहुलकादपत्येऽपि भवति। 'आप्नोते र्हस्वश्च नुट् वा'-इति भोजराजेन

---

* अयमेवास्य निगमो भवितुमर्हति—ऋ० सं० ८, २, ९, १।

† निरु० ११, २५।  ‡ अथ० सं० ५, ४, १; ९, निगमौ द्रष्टव्यौ।

§ निरु० ३, २।  ‖ पृ० २, १। पृ० १८० प० ७।

कर्माख्याग्रहणं न कृतम् * । आप्नोत्यनेन सर्वान्, कामान् पिता, आप्यते वा महता पुण्येन । "यच्चित्र मप्न उषसो वहन्ति (ऋ० सं० १, ८, ४, ५)" । 'आप्यम् धनम्'—इति माधवः, अपत्यं भवितुमर्हति ॥

(८) गयः † । गमेः 'अघ्न्यादयश्च (उ० ४, १०८)'—इति यक्-प्रत्ययान्तो निपात्यते, निपातनान्मकारलोपः । 'गाङ् गतौ (भू० आ०)' ; अस्माद्वा यक्-प्रत्यये ह्रस्वत्वम् । गतावर्थः पूर्वसुक्तः । गीयते स्तूयते देव-भट्टारकैत्येवमादिभिः । "इन्द्रो वसुभिः परि पातु नो गयम् (ऋ० सं० ८, २, १२, ३)"—इति निगमः ॥ "गयस्फानः प्रतरणः सु वीरः (ऋ० सं० १, ६, २२, ४)"—इति च । 'गृहापत्ययोर्नाम'—इति हरदत्तः, 'गृहम्'—इति तु माधव ॥

(९) जाः ‡ । 'जनी प्रादुर्भावे (दि० आ०)' ; 'अन्येष्वपि दृश्यते (३, २, १०१)'—इत्यत्र अपिशब्दस्य सर्वोपाधिव्यभिचारार्थत्वात् केवलाज्जनेर्डः, टाप्, जस् । जायते मातापितृभ्यां सकाशात् । "सीमः परि क्रतुना पश्यते जाः (ऋ० सं० ७, २, २६, ४)"—"अनमीवो रुद्र जासु नो भव (ऋ० सं० ५, ४, १३, २)" —इति च निगमौ ॥

(१०) अपत्यम् § । अपपूर्वात् तनोतेः नञ्पूर्वात् पतेर्वा 'अघ्न्यादयश्च ((उ० ४, १०८)'—इति यक्-प्रत्ययान्तो निपात्यते,

---

* कौत्सुयान्तु कर्माख्याग्रहणमस्ति (उ० ४, २०२) ।

† प० १०, २, ४ । ‡ निरु० २, ६ । § निरु० ३, १ ।

तनोते ष्टिलोपः। * * *। "कवेरपत्यमा दुहे (ऋ० सं० ६, ७, ३५, ३)"—इति निगमः॥

(११) यहुः। यातिर्ह्वयतियोरादिके मृगय्वादित्वात् (उ० १, ३६) कु-प्रत्यये निपातनाद्रूपसिद्धिः। यातः प्राप्तः पुत्त्ववशेन स्वनाम्ना ह्वयते च। 'यहुर्यातश्चाहूतश्च'—इति माधवः। "ईशानः सहसो यह्वो (ऋ० सं० १, ५, २७, ४)"—इति निगमः॥

(१२) सूनुः *। 'षूञ् प्राणिप्रसवे (अदा० आ०)'-'सुवः कित् (उ० ३, ३४)'—इति नु-प्रत्ययः। सूयते मात्रा। "अग्निं सूनुं सनश्रुतं सहसो जातवेदसम् ( ऋ० सं० २, १, ८, ४ )"—इति निगमः॥

(१३) नपात् †। नञ्-पूर्वात् पतेर्ण्यन्तात् 'बहुलमन्यत्रापि सञ्ज्ञाछन्दसोः (६, ४, ५१ वा०)'—इति णि-लोपः। 'न भ्राम्नपात् ( ६, ३, ७५ )'—इत्यादि सूत्रेण नञः प्रकृतिभावः। न पातयति न तेन पततीत्युक्तम्। "एहि वां विमुचो नपात् (ऋ० सं० ४, ८, २१, १)"—इति निगमः॥

(१४) प्रजा। प्रपूर्वाज्जनेः 'उपसर्गे च सञ्ज्ञायाम् (३,२,९९)' —इति डः, टाप्। "प्रजां देवि दिदिड्ढि नः (ऋ० सं० २, ७, १५, ६; ८, १०, २)"—इति निगमः॥

(१५) वीजम्। 'वीज प्रजननकान्त्यसनखादनेषु ( ? )'; इत्यस्मादच्-प्रत्ययः (३,१,१३४)। तथाच भोजराजीये 'वियो जक्' —इति व्युत्पादितम्। बवयोरभेदः। वेति प्रजायते गच्छत्यने-

---

* निरु० २, ११ ५, २१ ११, १०। † निरु० ८, ५।

मानृण' पिनेति वा। अत्र चीरस्वामी—'वीज्यते वेति वा वीजं वाजिलौकिकः'—इति । 'वीजिः स्यात् प्रेरणक्रिया'—इति माधवः । * * * प्रेर्यते हि कार्यकारणाय वा बीजम्' यथा धान्यादिवीजमुत्तरोत्तरं स्वाभिवृद्धये भवति एव मपत्यमपि पितृणामभिवृद्धिहेतुरिति वीजमित्युच्यते । "यस्यां बीजं मनुष्या ३' वपन्ति (ऋ० सं० ८, ३, २७, २)"—इति । वीजमपत्यार्थमिति दृष्टम् ॥

इति पञ्चदशापत्यनामानि ॥ २ ॥

मनुष्याः[1]। नरः[2]। धवाः[3]। जन्तवः[4]। विशः[5]। चितयः[6]। क्षृष्टयः[7]। चर्षणयः[8]। नहुषः[9]। हरयः[10]। मर्याः[11]। मर्त्याः[12]। मर्ताः[13]। व्राताः[14]। तुर्वशाः[15]। द्रुह्यवः[16]। आयवः[17]। यदवः[18]। अनवः[19]। पूरवः[20]। जगतः[21]। तस्थुषः[22]। पञ्चजनाः[23]। विवस्वन्तः[24]। पृतनाः[25]। इति पञ्चविंशतिर्मनुष्यनामानि * ॥ ३ ॥

(१) मनुष्याः † । 'मत्वा कर्माणि सीव्यन्ति (निरु० ३,७)'—इति भाष्यस्य स्कन्दस्वामी-'मत्वेत्यादिना मनेः सीवेश्च द्विधातुजत्वं प्रदर्शयति—ज्ञात्वाऽनेनेदमिति साध्यसाधनभावं कर्माणि

(२), "नरा , धवा' । नर" ग । "नरा । नर" C, D F छ ।
(६) "चितय"—छ ।　　　(९) "नहुषा" ग md छ ।
(१०) "अयव" ग, छ । * "इति मनुष्याणाम्" ग । † निरु० ३, ६ ।

सीव्यन्ति सन्तन्वन्ति, यथा पक्षादयः मनस्यमानेन प्रजापतिना सृष्टाः। मनस्यतिः कस्मिन्नर्थे ? इत्याह—प्रशस्तीभावे, प्रशंसायां मत्वर्थीयः, प्रशस्तं मनः प्रसन्नं सत्वप्राधान्यात् अतः प्रसन्नमनस्केन सृष्टा इत्यर्थः। तथा च श्रुतिः—'स पितॄन् सृष्ट्वा मनस्यदनु मनुष्यानसृजत'—इति। नित्यपक्षेऽप्यसति स्रष्टरि कार्ये सौमनस्यं दृष्ट्वा सृष्टिकारणानुविधायित्वात् कार्यस्य वा। 'मनोर्जातावञ्यतौ षुक् च ( ४, १, १६१ )'—इति वैयाकरणाः। जातिश्च प्रत्ययान्तोपाधिः। मनोरपत्यं जातिश्चेत्येतौ। अपत्यमात्रविवक्षायामन्तरेण च जातिं भवति मानव इति। मनुषो वा षकारान्तमेकं प्रातिपदिकमस्ति, अतस्तदन्तात् व्युत्पादयति ; अञ्यत्प्रत्ययसन्नियोगेन षुगिति स्मरणान्तरं विनापि प्रत्ययेन षकारान्तप्रयोगदर्शनात्—'समिद्धो अद्य मनुषो दुरोणे (ऋ० सं० ८, ६, ८, १)'—इति पृषोदरादित्वात् सर्वं सिद्धम्। अत श्रीनिवासः—'मनेर्मनुः * * * मनिरुसि मनुषीति। यत्। सा चास्या मनुष्यगोः'—इति। "स्पार्हा यस्य मनुष्या ददीमहि (ऋ० सं० २, ६, ३०, ४)"—"दैव्याः शमितार आरभध्व मुत मनुष्याः (ऐ० ब्रा० २, १, ६)"—इति च निगमौ॥

(२) नरः *। 'णीञ् प्रापणे (भ्वा० उ०)' ; 'नयतेर्डिच्च (उ० २, ८३)'—इति ऋन्-प्रत्ययः ; जस्। नयन्ति संसारचक्रम्, पदार्थत्वात् देशान्तरं नीयन्ते वा स्थानोत्तरकालेन। यद्वा 'नृती गात्रविक्षेपे (दि० प०)' ; बाहुलकाट्टन् डिच्च। नृत्यन्ति गात्रविक्षेपं

---

* निरु० ५, १।

कुर्वते हि नियमेन गात्राणि विक्षिप्यन्ति कर्मसु तानि कुर्वन्तः । "तं त्वा नरः प्रथमं देवयन्तः (ऋ० सं० ४, ४, ३५, २)"—"त्वां हुवेविन्द्र सत्पतिं नरः (ऋ०सं०४,७,२७,१)"—इति च निगमौ ॥

(३) धवाः * । 'धूञ् कम्पने (स्वा० उ०)', 'धुञ्' वा (क्र्या० उ०) । पचाद्यच् । धूनयति * * * । धुनोति स्नावयवान् धवः ; जस् धवाः । तद्वा ; मनुष्या मृत्युतो वेपन्ते । यद्वा ; 'धावु गतिशुद्ध्योः (भ्वा० उ०)' ; अस्मात् पचाद्यचि (३, १, १३४) पृषोदरादित्वात् ( ६, ३, १०९ ) ह्रस्वः । इतश्चेतः शरणार्थिनो धवन्ति धवाः । "को वां शयुत्रा विधवेव देवरम् (ऋ० सं ७, ८, १८, २)"—इति निगमः ॥

(४) जन्तवः † । 'जनी प्रादुर्भावे (दि० आ०) ; 'कमिमनिजनिगाभायाहिभ्यश्च (उ० १, ७०)'—इति तु-प्रत्ययः । जायन्ते जन्तवः । "घृतस्य त्वमग्ने प्रथयस्व जन्तुभिः (ऋ० सं० ८, ७, २८, ४)"—इति निगमः ॥

(५) *विशः* ‡ । 'विश प्रवेशने (तु० प०)' ; क्विप् । विशन्ति अनु प्रविशन्ति सर्वकर्मस्वधिकारित्वेन । यद्वा ; अनुप्रविष्टाः आत्मीयभूराजादेः श्रिता इत्यर्थः । "विशो राजानं मुपं तस्थुऋग्मियम् (ऋ० सं० ४, ५, १०, ४)"—इति निगमः ॥

(६) क्षितयः § । 'क्षि निवासगत्योः (तु० प०)' ; 'क्तिच्क्तौ च सञ्ज्ञायाम् (३, ३, १७४)'—इति क्तिच् । क्षियन्ति निवसन्ति

---

* निरु० ३, १५ ।  † निरु० ४, १९ ।

‡ प० ९ । निरु० १४, ८ ।  § पु० १, १ । ए० ६ प० ६ ।

भूमी गच्छन्ति वा तस्याम्। "अनु क्रोशन्ति क्षितयो भरेषु (ऋ० सं० ३, ७, ११, ५)"—इति निगमः॥

(७) कृष्टयः *। 'कृष विलेखने (भू० प०)'; भावे क्तः। कर्षणं कृष्टम्। कर्षेण कर्मविशेषेण चात्र सामान्यतः कर्ममात्रं लक्ष्यते; कृष्टं कर्म, तदस्यास्तीति 'लुगकारेकाररेफाश्च वक्तव्याः (४, ४, १२८ वा०)'—इति इकार-प्रत्ययः। तथाच भाष्यकारः -'कृष्टय इति मनुष्यनाम' कर्मवन्तो भवन्ति (ऋ० सं० सा० भा० ३, ४, ५, १)'—इति। तथाच श्रीभगवद्गीतायाम्—'नैव कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत् (म०भा०भी०प० २६अ० ५श्लो०)' —इति। यद्वा; शब्दोऽपि कृषि विपूर्वस्यार्थे वर्त्तते। कर्मणि क्तः। विविधं कृष्टो विक्षिप्तपरिकण्डूयनाद्यभिलषितक्रियानुष्ठान-समर्थः कः? इत्यपेक्षायां विकृष्टदेहत्वं कृष्टसामर्थ्याद्देहम्, स एषामस्तीति पूर्ववन्मत्वर्थीयः। तथाच भाष्यम्—'विकृष्टदेहा वा (ऋ० सं० सा० भा० ३, ४, ५, १)'—इति। 'कृषन्ति प्राप्तं पदाभ्याम्'—इति माधवः। 'कर्षन्ति वशीकुर्वन्ति'—इति भट्ट-भास्करमिश्रः। "मित्रः कृष्टीरनिमिषाभि चष्टे (ऋ० सं० ३, ४, ५, १)"—सद्यश्चिद्यः शवसा पञ्च कृष्टीः (ऋ० सं० ८, ८, २६, ३)" —इति च निगमौ॥

(८) चर्षणयः †। चरतेर्धातोः (भू० प०) 'अर्त्तिसृधृधम्यश्य-वितृभ्योऽनिः (उ० २, ८५)'—इति बहुलवचनादनि-प्रत्यये षुगा-गमश्च चरणवन्तः चरणशीलाः। यद्वा; 'कृषेरादेश्च चः (उ० २,

* निरु० १०, २८, ११। † निरु० ५, २४; १२, ११।

८७)'—इति अनि-प्रत्यये रूपमेतद्रूपम् । 'आकर्षन्ति वशीकुर्वन्ति इत्यर्थः'—इति भट्टभास्करमिश्रः । यद्वा ; चर्षणयः चायितारो द्रष्टारः सर्वेषां पदार्थानाम् । यद्यपि पश्यतिकर्मसु (निघ० २, २) विचर्षणिरिति पठितम् , तथापि 'पिता कुटस्य चर्षणिः (ऋ० सं० १, ३, २३, ४)'—इत्यत्र 'चाययिता द्रष्टा'—इति स्कन्दस्वामिना व्याख्यातम् । "प्र चर्षणिभ्यः पृतनाहवेषु (ऋ० सं० १, ७, २९, १)"—"महाँ इन्द्रो नृवदा चर्षणिप्राः (ऋ० सं० ४, ६, ७, १)"—इति च निगमौ ॥

(९) नहुषः । 'णह बन्धने (दि० उ०)' । 'जनेरुसिः (उ० २, १०८)'—इति बाहुलकात् उस्-प्रत्ययः, 'अस्' , नहुषः । नह्यन्ते कर्मभिः पूर्वकृतैः संसारे नह्यन्ति वा नहनीयम् । "सचा सनेम नहुषः सुवीराः (ऋ० सं० २,१,२,३)"—"आ यातं नहुषस्परि ( ऋ० सं० ५, ७, २५, १)"—इत्यादयो निगमाः ॥

अकारान्तमिदं नाम केषुचित् कोशेषु दृश्यते । तदा 'ऋतन्-हिभ्यामुषन् ( ? * )'—इति उषन्-प्रत्ययः । पूर्ववदर्थः । "प्रसक्षाणस्य नहुषस्य शेषैः (ऋ० सं० ४, १, ४, ६)"—इति निगमः ॥

(१०) हरयः † । 'हृञ् हरणे' भ्वादिः, 'हृ प्रसह्यकरणे' जुहोत्यादिः । 'इन् सर्वधातुभ्यः (उ० ४,११४)'—इतीन्-प्रत्ययः । हरन्ति पदार्थान् , प्रसह्योक्रियन्ते वा मृत्युनेति वा । तथाच मृत्यु-वाक्यम्—'अहं प्रजायाकुमतीर्हरामि'—इति निगमोऽन्वेषणीयः ॥

---

* कौमुद्यान्तु 'ऋहनिभ्यामूषन् (उ० ४, ७१)', 'पर कृषन् (७४)', पुनहि-कलिभ्यउषच् (७५)' एव दृश्यते ।　　† पु० १, १५ । प० १५९ प० २ ।

(११) मर्याः *, (१२) मर्त्याः। 'मृङ् प्राणत्यागे (तु० आ०); अघ्न्यादयश्च (उ० ४, १०८)'—इति यत्-प्रत्ययान्तं निपात्यते, तुडागमस्तु विकल्पेन। गुणः। म्रियन्ते मर्याः। 'छन्दसि निष्टर्क्य-देवहूयप्रणीयोन्नीयोच्छिष्यमर्य (३,१,१२३)'—इत्यादिना यत्प्रत्ययान्तं निपातितम्। "को नु मर्या अमिमितः (ऋ० सं० ६, ३, ४८, ३७)"—"मर्यायेव कन्या शश्वचै ते (ऋ० सं० ३, २, १२, ५)"—"मर्यत्र योषा कृणुते सधस्थ आ (ऋ० सं० ७, ८, १८, २)" —इति निगमाः। यद्वा; 'मृङ् प्राणत्यागे (तु० आ०)'; हसि मृग्रिरावामिदमिलूपूधूर्विभ्यस्तन् (उ०३,८३)'—इति तन्-प्रत्ययः। अर्थः पूर्ववत्। मर्त्तशब्दात् 'वल्मर्त्त * * * यविष्टेभ्यश्छन्दसि' —इति स्वार्थिकस्तद्धितो यत्। "यो मर्त्येष्वमृत ऋतावा(ऋ० सं० ३, ४, १६, १)"—इति निगमः॥

(१३) मर्त्ताः। व्याख्याताः। "मा नो मर्त्ता अभिद्रुहन् (ऋ० सं० १, १, १०, ५)"—"तं मर्त्ता अमर्त्यम् (ऋ० सं० ८, ६, २५, १)"—इति च निगमौ॥

(१४) व्राताः। 'वृञ् वरणे (स्वा० उ०)'; 'तातव्रातलात-सुपित्त'—इत्यादि सूत्रेण भोजराजेन क्तप्रत्यये आडागमो निपात्यते। वृणवन्ति स्वमभिमतं देवताभ्यः तपसाराधितेभ्यः प्रव्रियन्ते वा यज्ञादौ। यद्वा; व्रातो धान्यादिसञ्चयः। तद्वन्तो व्राताः। मत्वर्थीयोऽकारः। यद्वा; व्रतमिति कर्मनाम (निघ० २, १) अन्नं वा। अन्नमपि व्रतायेतस्मादेवेत्युक्तेः तदीयाः 'तस्येदम् (४,३,१२०)'

* निरु० १, १५ ४, २।

—इत्यण्। 'कर्मणा जायते जन्तुः कर्मणैव प्रमुच्यते'—इत्युक्तेः कर्मणामधिकारित्वाच्च मनुष्याणां कर्मसम्बन्धित्वम्। 'अथो अन्नाद् भूतानि जायन्ते जातान्यन्नेन वर्द्धन्ते (तै० उ० १, २)'—इति, 'अन्नात् रेतो रेतसः पुरुषः (तै० उ० १, १)'—इति च श्रुतेः मनुष्याणामन्नसम्बन्धित्वम्। "पञ्च व्राता अपस्यवः (ऋ० सं० ६, ८, ३, २)"—इति निगमः॥

(१५) तुर्वशाः *। 'तुर्वी हिंसायाम् (भू० प०)'। 'कलेरशच्'—इति बाहुलकात् अशच्-प्रत्ययः। भोजराजीयमिदं सूत्रम्। हिंसन्ति प्राणिनः, हिंस्यन्ते व्याघ्रादिभिर्वा। यद्वा; 'तुर त्वरणहिंसनयोः (दि० आ०)', अस्मात् क्विपि तूर्; अश्नोतेः पचाद्यच्; तूर्णमश्नुवते पृषोदरादित्वात् (६, ३, १०९) पूर्वपदस्य ह्रस्वत्वं वकारश्चोपजनः। तुस्तूर्णमश्नुते। 'प्राप्यम्'—इति माधवः। यद्वा; तूर्वशः काम एषामिति तूर्वशाः, पूर्ववत्पूर्वपदस्य ह्रस्वत्वम्। 'वश कान्तौ (अदा० प०)'—इत्यस्मात् 'वशिरण्योरुपसङ्ख्यानम् (३, ३, ५८ वा०)'—इत्यप्। यद्वा; चतुर्षु धर्मार्थकाममोक्षेषु वश एषामिति चतुर्वशाः सन्तः चकारलोपेन तुर्वशाः"स्वममहि (ऋ० सं० ५, ७, ३३, ४)—इति निगमः॥

(१६) द्रुह्यवः। 'द्रुह जिघांसायाम् (दि० प०)'; औणादिकः क्विप्; द्रोहः। द्रोहं परेषामिच्छन्ति 'छन्दसि परेच्छायामपि (३, १, ८ वा०)'—इति क्यप्, 'क्याच्छन्दसि (३, २, १७०)'—इत्युप्रत्ययः। परहिंसारुचयो हि प्रायेण मनुष्याः। "श्रुष्टिं चक्रु र्भृगवो द्रुह्यवश्च (ऋ० सं० ५, २, २५, १)"—इति निगमः॥

---

* प० ११।

(१७) आयवः *। 'इण् गतौ (अदा० प०)'; 'छन्दसीणः (उ० १, २)'—इत्युण्-प्रत्ययः। गच्छन्ति ग्रामात् ग्रामम्, गमनशीलाः। "बाहुभ्यामग्निमायवोऽजनन्त (ऋ० सं० ७, ६, २, ५)" "आयोर्ह स्कम्भ उपमस्य नीळे (ऋ० सं० ७, ५, २२, ६)"—इति च निगमौ। 'अन्तोदात्त आयुशब्दो मनुष्यवचनः'—इति माधवः॥

(१८) यदवः। 'यमु उपरमे (भू० प०)'; 'यमेर्दुक्'—इति श्रीभोजदेवः। 'अनुदात्तोपदेशवनतितनोत्यादीनाम् (६, ४, ३७)'—इत्यादिना अनुनासिकलोपः। यम्यते नियम्यते आचार्येण अपथप्रवृत्ताः, राज्ञा वा। "यो अस्ति यादः पशुः (ऋ० सं० ५, ७, १६, १)—इति निगमः। अत्र माधवः—'यदुषु भवो यादो यदुरिति मनुष्यनाम'—इति॥

(१९) अनवः। 'अन प्राणने (अदा० प०)'; 'अणश्च (उ० १, ८)'—इति विधीयमान उ-प्रत्ययो बाहुलकात् भवति। अनन्त्यनवः। ज्ञानवत्त्वादेतेषां धर्माद्यनुष्ठानात् प्राणनस्य फलवत्त्वात् अनन्तीत्युच्यन्ते। इतरे पश्वादयो ज्ञानहीनत्वात् निष्फलप्राणनाः। तथाचोपनिषदि—'तस्य य आत्मानं विस्तरं वेद'—इत्यत्र प्रकरणे ज्ञानवत्त्वात् पुरुषस्य वैशिष्ट्यं प्रतिपादितम्। "रोधाय विद्दनवाय (?)"—इति निगमः। अत्र माधवः—'अनुरिति मनुष्यनाम'—इति। "अनंवस्ते रथमश्वाय तक्षन् (ऋ० सं० ४, १, २८, ४)"—इति च। अत्र 'अनवः ऋभवः ते च मनुष्याः'। 'मर्त्तासः सन्तो अमृतत्वमानशुः (ऋ० सं० १, ७, ३०, ४)'—इति श्रुतिः।

* निरु० ८, २ १०, ११ ११, ४८।

तथा ब्राह्मणमपि—'आर्भवं शंसत्यृभवो व देवेषु तपसा सोम-पीथमभ्यजयन् (ऐ० ब्रा० ३, ३, ५)—इत्यादि, 'तेभ्यो वै देवा अपैवाबीभत्सन्त मनुष्यगन्धात् (ऐ० ब्रा० ३, ३, ५)'—इति च ॥

(२०) पूरवः *। 'पूरी आप्यायने (दि० आ०)'। 'भृमृशीङ्-चरित्सरि (उ० १, ७)'—इत्यादिना बाहुलकात् उ-प्रत्ययः। पूर-यितव्याः कामानां 'रुपूभ्यां कुः' - इति श्रीभोजदेवः। पूताः शुद्धाः स्नानार्थिभिरित्यर्थः। "यं पूरवो' वृत्रहणं सचन्ते (ऋ० सं० १, ४, २५, ६)"—इति निगमः ॥

(२१) जगतः †। 'गम्लृ गतौ (भू० प०)'। 'वर्त्तमाने पृषद्बृहन्महज्जगच्छतृवच्च (उ० २, ७८)'—इति क्विप्-प्रत्ययान्तो निपात्यते। प्रत्ययस्यादादेशः, द्विर्वचनं, नञि लोपश्च निपात्यते। गच्छति ग्रामात् ग्रामान्तरम्। "यदिं पामप्रं जगता मिरज्यसि (ऋ० सं० ८, ३, ६, २)"—इति निगमः ॥

(२२) तस्थुषः ‡। 'ष्ठा गतिनिवृत्तौ (भू० प०)'। 'छन्दसि लुङ्लङ्लिटः (३, ४, ६)'। 'क्वसुः (३, २, १०७)'। 'वस्वेका-जाद्घसाम् (७, २, ६७)'—इति इडागमः। 'आतो लोपः (६, ४, ६४)'। 'लिटि धातोः (६, १, ८)'—इति द्वित्वम्। 'शर्पूर्वाः खयः (७, ४, ६१)'—इति थकारस्य शेषः। 'अभ्यासे चर्च (८, ४, ५४)' —इति तकारः। तस्थिवस् इति स्थिते जसः स्थाने व्यत्ययेन शस् (३, १, ८५)। 'वसोः सम्प्रसारणम् (६, ४, १३१)'। 'शासि-

* निरु० ७, २१।
† प० ११, १४। निरु० ५, १०, ७, ११ ८, १२ १२, १६ [illegible]।
‡ निरु० १२, १६।

वसिष्ठसीनाथ (८, ३, ६०)'—इति पत्वम्। तिष्ठन्ति स्वस्मिन् धर्मे। "चरन्तं परि तस्थुषः (ऋ० सं० १, १, ११, १)"—इति निगमः। अत्र वाजसनेयभाष्यकृदुवटः 'तस्थुषो मनुष्याः ऋत्विग्यजमाना इत्यर्थः'—इति॥

(२३) पञ्चजनाः *। अत्र भाष्यम्—'तत्र पञ्चजना इत्येतस्य निगमा भवन्ति। "तदद्य वाचः प्रथमं मंसीय०—० जुषध्वम् (ऋ० सं० ८, १, १३, ४)"। तदद्यवाचः परमं मंसीय 'येनासुरानभिभवेम देवाः'। असुरा असुरता स्थानेष्वस्ता स्थानेभ्य इति वापि वासुरिति प्राणनामास्तः शरीरे भवति तेन तद्वन्तः। सोऽदेवानसृजत तत्सुराणां सुरत्वमसोरसुरानसृजत तदसुराणामसुरत्वमिति विज्ञायते। 'ऊर्जाद उत यज्ञियासः'। अन्नादाश्च यज्ञियाश्चोर्गित्यन्ननामोर्जयतीति सतः पक्वं सु प्रवृक्णमिति वा॥ 'पञ्चजना मम होत्रं जुषध्वम्'। गन्धर्वाः पितरो देवा असुरा रक्षांसीत्येके, चत्वारो वर्णाः निषादः पञ्चमः इत्यौपमन्यवः। निषादः कस्मात्? निषदनो भवति निषण्णमस्मिन् पापकमिति नैरुक्ताः। "यत्पाञ्चजन्यया विशा (ऋ० सं० ६, ४, ४२, १)"। पञ्चजनीनया विशा, पञ्च पृक्ता सङ्ख्या लिङ्गत्रयोगेष्वविशिष्टा †' (निरु० ३, ७-८)'—इति। अस्य स्कन्दस्वामी—'पञ्चजना इत्येतस्य सन्दिग्धस्य विवेकार्थं निगमा भवन्ति सन्देहश्च मनुष्यनामसु पाठात् पञ्चशब्देन समानाधिकरणः। तत्र यदि देवदत्तादि

---

* निरु० ३, ७, ८. ४, २३।

† 'पञ्च पृक्ता सङ्ख्या स्त्रीपुंनपुंसकेष्वविशिष्टा'—इति निरुक्तपुस्तक-पाठ।

पञ्चक-विषयः स्यात् गन्धर्वादिपञ्चकविषयो वा, न मनुष्यमात्र-नामविषयतात्र स्यात्, मनुष्यमात्रनामैतदित्याचार्यमतान्तरप्रदर्शनाय पदद्वयमिदम्मनुष्यपदार्थे वर्त्तते इति वैचित्र्यप्रदर्शनार्थं उपन्यासः। न मनुष्यनामत्वेन च द्रष्टव्यः।' एकीयमतेन चाष्टौ देवताया उच्यन्ते। तत्र पक्षे नागानां गन्धर्वेषु, यक्षाणामसुरेषु, पिशाचानां रक्षस्वन्तर्भावदृष्टत्वाविरोधात्। तदस्य वाचः। सौचिकस्याग्ने विश्वेषां देवानां संवादो होत्रजपपर्यायम्। तत् अद्य अस्मिन् कर्मणि वाचो माध्यमिकायाः प्रथममुत्कृष्टं स्वरसौष्ठवार्थसदनत्व-देवताविशिष्टं मंसीय जानीय। येन अज्ञानेन असुरा यज्ञविघ्नं कुर्वन्तः, हे देवाः! अद्य तानभिभवेम। हे ऊर्जादः। उत अपि यज्ञियासः यज्ञस्य सम्पादयितारः पञ्चजनाः आचार्यमतेन ऋत्विङ्-मनुष्याः। यमस्थवस्थपतीष्टौ निषादानां यज्ञसम्पादित्वमस्ति, शूद्रस्याप्योदनसवे; 'आयुरसीति शूद्राय प्रयच्छति, तत्ते प्रयच्छामीति शूद्रः प्रतिगृह्णाति'—इत्येवमादिना। तथा 'दासी पिनष्टि पत्नी वेत्यत्र दास्यादेर्व्यापारादप्येवं यज्ञसम्पादित्वमेकीयमतेन। पञ्च यज्ञाङ्गभूता देवगन्धर्वादय साधनभावेन यज्ञसम्पादिनः। अत उच्यते—'मम होत्रं जुषध्वम्'। होत्र-कर्म जुषध्वम् सम्पादयतेत्यर्थः। अन्ये मन्यन्ते—यदेकीयमतं यश्चौपमन्यवस्य तदुभयमप्याचार्यस्येति। तथा च मन्त्रव्याख्यानम्—पञ्चजातयो ब्राह्मणादयो यज्ञियाः गन्धर्वादयः सर्वेऽपि होतुः सङ्गेन व्यापारेण सेव्यध्वमिति सम्प्रत्ययासाधारणं मनुष्यमात्रनामत्वेनैव निगमं दर्शयति 'यत्पाञ्चजन्यया विशा'। प्रगाथस्यार्षम्। यत् यदा पाञ्चजन्यया पञ्चजनेषु मनुष्येषु भवया विशेषति पञ्चभिरपि मनुष्यजातैरित्यर्थः'—

इत्यादि। पञ्चेति निर्वाच्यम् पृक्तेति निर्वचनम्। सङ्ख्येति विषय-कथनं सम्बन्धवत् सर्वलिङ्गैरित्याह—'लिङ्गत्रययोगेप्यवशिष्टा'—इति। ननु षड़ादीन्यप्यवशिष्टानि ? उच्यते—प्रत्ययोपासरूप-सम्बन्धस्यार्थाभिधानात् अदोष इत्युक्तम्। अपिच या पृक्ता सा पञ्चेति किन्तु या पञ्च सा पृक्तेति तदन्यत्र एकपदनिरुक्तव्याख्यानम्, यत्पञ्चजन्ययेत्यस्य द्वितीयपादादिव्याख्यानं चास्माकमत्रानुपयुक्त-त्वान्न लिखितम्। 'पृची सम्पर्के (रु० प०)'। 'कनिन् युवृषि (उ० १, १५४)'—इत्यत्र प्राक्-प्रत्ययनिर्देशस्याधिकविध्यर्थत्वात् कनिनि बाहुलकात् ऋकारस्याकारो नकार उपजनश्च। भोज-राजस्तु—'तृपितक्षिराजिघसिपचिप्रतिहिविभ्यः कन्'—इत्याह, तदा 'पचि विस्तारे ( चु० प० )'—इति धातुः। एकादिभ्यो विस्तीर्णा पञ्चसङ्ख्या। जायन्ते जनाः। पचाद्यच् (३, १, १३४)। 'पञ्चभिर्भूतैर्जाताः पञ्चजनाः'—इति क्षीरस्वामी॥

(२४) विवस्वन्तः *। 'वस निवासे (भू० प०)' इत्यस्मात् 'अन्येभ्योऽपि दृश्यन्ते (३, २, ७५)'—इति विच्, दृशिग्रहणात् भावे भवति। विविधं वसनं विवः, तद्वन्तो विवस्वन्तः। सर्वस्यापि मनुष्यस्य यत् किञ्चित् विवसनमस्ति। 'विवस्वच्छब्द आदित्य-वाच्याद्युदात्तः, अन्यत्र मनुष्यविशेषे यजमाने द्वितीयाक्षरमुदात्तम्'—इति माधवः। "आविर्भव सुक्रतुपा विवस्वते (ऋ० सं० १, २, १२, ३)"—"शिवो दूतो विवस्वतः (ऋ० सं० ६, १, २२, ३)"—इति च निगमौ। अत्र विवस्वान् यजमानः'—इति माधव-

* निरु० ७, २६।

भाष्यम्। 'भद्रा जाया विवेस्वतीव नाग (ऋ॰ सं॰ ७,६,२२,१)'
—इत्यादिष्वव्यवनस्योदाहरणम् ॥

(२५) पृतना: *। 'पृङ् व्यायामे (तु॰ आ॰)'। "त्वयार्ध्यवेण पृतना जयेयम् (ऋ॰ सं॰ ८, ७, १५, १)"—इति निगमः ॥

मनुष्याणां बहुत्वं, ततो बहुवचनान्तत्वम्, तथा निघण्टुष्वपि। 'मनुष्या मानुषा मर्त्या मनुजा मानवा नराः। स्युः पुमांसः पञ्चजनाः पुरुषाः पूरुषा विशः (अम॰ को॰ २, ६, १)'—इत्यादिषु च बहुवचनान्तता दृश्यते ॥

इति पञ्चविंशतिर्मनुष्यनामानि ॥ २५ ॥

आयती(१)। च्यवाना(२)। अभीशु(३)। अप्नवाना(४)। विनङ्गसौ(५)। गभस्ती(६)। करस्नौ(७)। बाहू(८)। भुरिजौ(९)। क्षिपस्ती(१०)। शक्वरी(११)। भरित्रे(१२)। इति द्वादश बाहुनामानि †॥ ४ ॥

(१) आयती। 'यती प्रयत्ने (भू॰ आ॰)', गतिकर्मा वा (निघ॰ २, १४)—'इन् सर्वधातुभ्यः (४, ११४ उ॰)'—इतीन्-प्रत्ययः। आभिमुख्येन यतते कार्येषु, गच्छन्तौ वा साधनत्वम्। बाह्वोर्द्वित्वात् सर्वत्र द्विवचनान्तता। निगमोऽन्वेषणीयः ‡॥

(२) च्यवाना। 'च्युङ् गतौ (भू॰ आ॰)'। 'सम्यानच् स्तुवः

---

* निरु॰ ८, २४।	(३) "अभीषू"—इति क।	(८) "बाहू"—इति क।

(१०) "क्षिपन्ती"—इत्यपि टीकासम्मतम्। "क्षिपंती"—इति क।

† "इति बाह्वो" ग। ‡ बहुष्वेवाख्यायतीपद पर सर्वेष्वेवागच्छन्तीत्येवार्थंचकार सायण।

(उ० २, ८३)'—इत्यत्र प्राक्-प्रत्ययनिर्देशोऽधिकविध्यर्थं इत्युक्तेः शानच् प्रत्ययः। 'सुपां सुलुक् (७, १, ३८)'—इत्यादिना द्विवचनस्याकारः। गच्छतः कर्मणामन्तः। निगमोऽन्वेषणीयः॥

(३) अभीशू *। व्याख्यातौ रश्मिनामसु ( ३७ पृ० )। अभ्यश्नुवाते कर्माणि अभिनयन्तौ वा कर्माण्यतः अभीशाते कर्माणि कर्त्तुमिति वा। निगमोऽन्वेषणीयः॥

(४) अप्नवाना। 'आप्लृ व्याप्तौ (स्वा० प०)'; 'ताच्छील्यवयोवचनशक्तिषु चानश् (३, २. १२८)', अस्य सार्वधातुकत्वात् श्नुः, 'छन्दस्युभयथा (३, ४, ११७)'—इत्यार्द्धधातुकत्वात् गुणः, धातोर्ह्रस्वत्वं पृषोदरादित्वात् (६, ३, १०८)। आप्नुतः कर्माणि। यद्वा; अप्न इति कर्मनामसु व्याख्यातम् (१७१ पृ०); तदस्यास्ति 'छन्दसीवनिपौ (५, २, १२२ वा०)'-इति वनिपि विभक्तेः राकारः पूर्ववत्, सकारलोपश्छान्दसः। कर्मवन्तौ हि बाहू। नकारान्तौ वेति सन्देहः। निगमदर्शनान्निर्णयः॥

(५) विनङ्गृसौ। बाहुनाम। विनम्य ग्रसतोऽन्नादिकमिति -माधवः। पृषोदरादित्वात् (६, ३, १०८) पूर्वपदे म्य-लोपो नुक्; 'ग्रस अदने (भ्वा० आ०)'—इत्यस्मात् पचाद्यच् ( ३, १, १३४ ), सम्प्रसारणञ्च। "अन्वंसे जोषंमभरद्विनङ्गृसः ( ऋ० सं० ७, २, २७३)"—इति निगमः॥

(६) गभस्ती †। व्याख्यातौ रश्मिनामसु (३७ पृ०)। पुरुषाः अदन्त्याभ्यां मन्नादीन् 'यद्वेगभस्ती बाहू, गृह्णाति पदार्थानाभ्यां

* पु० १, ५। पृ० ३० प०१६। † पु० १, ५, पृ० ३० प० ६। प० ५।

पुरुषः'—इति माधवः। "शर्यांभि र्न भरमाणो गभस्त्योः (ऋ०सं० ७, ५, २२, ५)"—इति निगमः॥

(७) करस्नौ *। करांसीति कर्मनामसु करशब्दो व्याख्यातः (१७४ पृ०)। तस्मिन् कर्मण्युपपदे 'ष्णै वेष्टने (भू० प०)'—इत्यस्मात् 'आतोऽनुपसर्गे कः (३, २, ३)', 'आतो लोप इटि च (६, ४, ६४)'। 'कर्मणां प्रस्नातारौ (निरु० ६, १७)' वेष्टयितारौ कर्मकरावित्यर्थः। "सुपकरस्नमूतये' (ऋ० सं० ६, ३, २, ५)" —इति निगमः॥

(८) बाहू †। 'बाहृ लोडने (भू० आ०)'। 'अर्जिदृशिकम्य-मिपसिबाधा मृजिपशितुक्धुक्दीर्घहकाराश्च (उ० १, २६)'—इत्यु-प्रत्ययो होऽन्तादेशश्च। गमयत्याभ्यां कर्माणि, बाधते पराना भ्या-मिति वा। "ऋभ्वातेदन्द्र स्थविरस्य बाहू (ऋ० सं० ४, ७, ३१, ३)"—इति निगमः॥

(९) भुरिजौ। 'हृञ् हरणे (भू० उ०)', 'डु भृञ् धारण-पोषणयोः (जु० उ०)'; 'भृञ उच्च (उ० २, ७१)'—इति इजि-प्रत्ययः। हरतो बिभृतो वा पदार्थान् कर्मकरणसामर्थ्यं वा। "तमंह्यन् भुरिजो' धिया (ऋ० सं० ६,८,१६,४)—इति निगमः॥

(१०) क्षिपस्ती। 'क्षिप प्रेरणे' तुदादिः (प०); 'वसवित-सेस्तिः ( ? ‡ )'—इति बाहुलकात् ति-प्रत्ययः धातोरसुगागमो गुणाभावश्च। प्रेर्यन्ते कर्मसु पुरुषैः॥ 'क्षिपती'—इति पाठान्तरम्।

---

* निरु० ६, १० ।                                    † निरु० १, ८ ।

‡ कौमुद्यान्तु 'वसिवसि (उ० ४, १०४)—इत्येकं सूत्रम् 'वौ तद्दे (उ० ४, १८०)' —इति पाठान्तरम्।

तदा गतरि ङीपि 'आच्छीनद्योर्नुम् (७, १, ८०)', 'वा छन्दसि (६, १, १०६)'—इति द्विवचनस्य पूर्वसवर्णः। क्षिपतः पदार्थान् इतयेतय कर्मसु। यद्वा ; क्षिपेः 'रुहिनन्दिजीविप्राणिभ्यः षिदाशिषि (उ० ३, १२३)'—इति बाहुलकात् झच्-प्रत्ययः झोऽन्तादेशः। क्षिपतः पदार्थात्। निगमदर्शनाविर्षयः॥

(११) शक्वरी *। 'शक्लृ शक्तौ (स्वा० प०)'; 'श्यामदिपद्यर्त्तिपूशकिभ्यो वनिप् (उ० ४, १०८)'—इति वनिप्-प्रत्ययः, 'वनो र च (४, १, ७)'—इति ङीबौ च पूर्ववत् पूर्वसवर्णादेशः। शक्नुतः कर्माणि कर्त्तुम्। "अङ्गुलयः शक्वर्यो दिशश्च मे यज्ञेन कल्पन्ताम् (य० वा० सं० १८, २२)"—इति निगमः॥

(१२) भरित्रे। विभर्त्ति रश्मीनादित्य इव। 'अर्शिलादिभ्य इत्रोत्रौ (उ० ४, १६८)'—इति इत्र-प्रत्ययः। भूरिवदर्थः। "अंशुं दुहन्ति हस्तिनो भरित्रैः (ऋ० सं० ३, २, २०, २)"—इति निगमः॥

इति द्वादश बाहुनामानि॥ ४॥

अग्रुवः(१)। अण्वाः(२)। विशः(३)। क्षिपः(४)। शर्याः(५)। रशनाः(६)। धीतयः(७)। अथर्यः(८)। विपः(९)। कक्ष्याः(१०)। अवनयः(११)। हरितः(१२)। स्वसारः(१३)। जामयः(१४)।

* प० ११। निरु० १, ८।

(३) इतोऽनन्तरं "विधाः"—इत्यधिकं ग पुस्तके। (५) "शर्याः" ख, ङ।

(८) "अथर्य."—इत्यपि टीका-सम्मतम्। "अथर्यो." ग. ङ.C. D. F।

(१२) इतोऽनन्तर "रोहित."—इति ग. iid।

सनाभयः[16]। योक्त्राणि[16]। योजनानि[17]। धुरः[18]। शाखाः[19]। अभीशवः[20]। दीधितयः[21]। गभस्तयः[22]।

इति द्वाविंशतिरङ्गुलिनामानि * ॥ ५ ॥

(१) अग्रुवः †। 'जत्वादयश्च (उ० ४, १००)'—इति रु-प्रत्ययान्तेषु निपातेषु द्रष्टव्यः। 'अगि गतौ (भू० प०)'—इति धातुः; निपातनान्न-लोपः, तन्वादित्वादुवङ्। गच्छति कर्माणि प्रति। यद्वा; अग्र-शब्दे उपपदे गमेः पूर्वनिपातनात् रु-प्रत्यये पूर्वपद-अ-लोपः गमेष्टिलोपश्च। अग्रे गच्छन्ति ताः। "तमीं हिन्वन्त्यग्रुवः (ऋ० सं० ६, ७, १७, ३)"—इति निगमः। अङ्गुलीनां बहुत्वात् सर्वत्र बहुवचनान्तता॥

(२) अण्व्यः ‡। अणतिः शब्दार्थः (भू० प०); 'भृमृ (उ० १, ८)'—इति उ-प्रत्ययः। 'वोतो गुणवचनात् (४, १, ४४)'—इति ङीप्। अणन्ति स्फोटनादि शब्दं कुर्वन्ति, तालादि शब्दं कुर्वन्त्याभिरिति वा। यद्वा; अण्व्यः ह्रस्वपरिमाणापेक्षयाल्पपरिमाणाः। "तमीमण्वीः समर्य आ (ऋ० सं० ५, ७, १७, २)"—इति निगमः॥

(३) विशः। 'विश प्रवेशने (तु० प०)'। 'क्विप् वचि (३, २, १७८ वा०)'—इत्यत्र 'प्राक् प्रत्ययनिर्देशादिष्टसिद्धिः'—इत्युक्तेः क्विपि रेफ उपजनः विशन्ति साधनभावं कार्येषु। "तमीं

(२२) नास्त्येतत् पदम् ग. C. D. F पुस्तकेषु। टीकाकृता तु एतस्येव स्थाने केषुचित् "गुहस्तः"—इति, केषुचित् "सप्तम"—इति च दृष्टम्।

* "द्वाविंशतिरङ्गुलीनाम्" ग। † ऋ० १, ११। ऋ० १९६ प० १८। ‡ निघ० ६, ११।

हिन्वन्ति धीतयो दश व्रिशः ( ऋ० सं० २, २, १३, ५ )"—इति निगमः। 'कर्मसु धीयमाना दशाङ्गुलयः'—इति माधवभाष्यम् ॥

(४) क्षिपः। 'क्षिप प्रेरणे (दि० प०)'; औणादिकः क्विप्। क्षिप्यन्ते प्रेर्यन्ते पुरुषेण कर्मसु निक्षिपन्त्याङ्गुलीयकादीन् इति वा। "मृजन्ति त्वा दश क्षिपः ( ऋ० सं० ६, ७, ३०, ४ )"—इति निगमः ॥

(५) शर्याः *। 'शॄ हिंसायाम् (क्र्या० प्वा० प०)'। 'अघ्न्यादेराकृतिगणत्वात् यत् (उ० ४,१०८)। शृणाति पापात्। "आ यः शर्याभिस्तुविनृम्णो अस्य (ऋ०सं० ८,१,२६,२)"—इति निगमः ॥

(६) रशनाः †। रश्मिबन्धनार्थो धातुरित्युक्तं रश्मिनिर्वचने (३७ पृ०)। 'युच् बहुलम् (उ० २, ७४)'—इति युच्। बध्नन्ति बन्धनीयं, बध्यते आभिरिति वा। युच्-प्रकरणे 'अशेरश च'—इति श्रीभोजदेवः। अश्नुवते कर्माणि। "रशनाभिर्दशभिरभ्यधीताम् (ऋ० सं० ७, ५, ३२, ६)"—"अच्छा बर्हीरशनाभिर्नयन्ति (ऋ० सं० ७, ३, २२, १)"—इति च निगमौ ॥

(७) धीतयः ‡। 'धी (दि० आ०)'-धातोः 'क्तिच्क्तौ च सञ्ज्ञायाम् (३,३,१७४)'—इति क्तिच् व्यत्ययेन दधातेरपि भवति, 'द्युमास्थागापाजहाति (६, ४, ६६)'—इतीत्वम्। धीयन्ते विधीयन्ते पुरुषैः कर्मसु, धारयन्ति कर्मसाधनानि वा। अथास्मर्पितृप्यर्थो दधातिः। "स सप्तधीतिभिर्हितः (ऋ० सं० ६, ७, ३२, ४)"—इति निगमः ॥

---

* प० ४, २। निरु० ५, ५, १०, २८। † निरु० ३, १४। ‡ निरु० ९, २४. १०, ४१; ११, १८।

(८) अथर्यः । 'अत सातत्यगमने (भ्वा॰प॰)'; 'इन् सर्वधातुभ्यः (उ॰ ४,११८)'—इतीन्-प्रत्ययो बाहुलकात् धातोरथरादेशः; 'कृदिकारादक्तिनः (४,१,४५ वा॰)'—इति ङीप्; जस्। 'उपर्बुध-मथर्यो३ न दन्तम् (ऋ॰सं॰ ३,५५,३)' इत्यत्र 'अथर्यो न स्त्रिय इव'—इति माधवः। अथर्य इति तेनाप्यपाठि अङ्गुलिनामसु ॥

"अथर्यव"—इति पाठो बहुषु दृष्टः। तद्बाहुनामकरणं स्पष्टम्। निगमदर्शनाविषयः ॥

(९) विपः *। 'विप प्रेरणे (चु॰ प॰)', क्विपि, प्रेर्यन्ते पुरुषैः कार्येषु। "विपो न द्युम्ना नि युवे जनानाम् (ऋ॰सं॰ ६,१,३५,३)'—इति निगमः ॥

(१०) कक्ष्याः †। "दशावनिभ्यः (ऋ॰सं॰ ८,४,३०,२)'—इत्यत्र कक्ष्याः प्रकाशयन्ति कर्माणि (निरु॰ २,८)'—इति भाष्यम्। कक्ष्याः प्रकाशयन्त्यनुष्ठानफलेन फलेन वा कर्माणि। 'ख्यातेः कक्ष्यशब्दनिर्वचनम्' इति स्कन्दस्वामी। 'गाहतेः क्स इति नामकरणः ख्यातेर्वा (निरु॰ २,२)'—कक्ष्यशब्दनिर्वचनपरे भाष्ये स्कन्दस्वामिग्रन्थः—'ख्या प्रकथने (अदा॰प॰)' इत्यस्मात् स प्रत्यये निपातितो निर्निमित्तकोऽसौ सः यकाराकारयोर्लोपोऽभ्यासविकारश्च द्रष्टव्य' - इति। अयमभिप्रायः —प्रायेण हतॄवदिहनिकमिकषिभ्यः स (उ॰३,५९)'—इति ख्यातेर्बाहुलकात् स प्रत्यये बाहुलकादेव द्विर्वचने हलादिशेषे कृतत्वे 'कुहोश्चुः (७,४,६२)' न भवति बाहुलकादेव, 'अभ्यासे चर्च (८,४,५४)'-इति चर्त्वम्,

---

* ऋ॰ १, ११। १०.३६ पं॰ ११ पं॰ ३ ११। H169

† निरु॰ २, ० २, ६ ८ १८।

भवन्ती क्षियन्ते पदार्थं याभिः, कार्येषु क्षेप्या वा । यद्वा ; स्व-शब्दे उपपदे 'ऋ गतौ प्रापणे (भू०प०)'—इत्यस्माद् बाहुलकादर् बाहुलकात् टि-लोपश्च । स्वं स्वं व्यापारं गच्छन्ति प्राप्नुवन्ति, स्वस्मिन् स्वस्मिन् हस्ते सीदन्तीति वा । यद्वा ; परस्परं भगिनीव दृश्यन्ते, एकहस्तासम्भवत्वात् स्वसारः उच्यन्ते 'न षट्स्वस्रादिभ्यः (४,१,१०)' —इति स्त्रीप्रत्ययनिषेधः । 'दुवस्यन्ति स्वसारो अग्नेयाणम् (ऋ० सं०१,५,२,५)'—इति निगमः ॥

(१४) जामयः *, सनाभयः । अनयो———मयोंऽनुसन्धेयः । जमतेर्गतिकर्मण (निघ०२,१४) 'जमिघसिभ्यामिण् (उ० ४,१२६)—इति बाहुलकादिण् प्रत्ययः । 'भलिशलिपलिघसिजम्यणिपणिभ्य इण्' इति श्रीभोजदेवः । जमन्ति गच्छन्ति कर्माणि प्रति अदन्त्याभिरन्नादीनि वा । जमेरेव वा बाहुलकान्मकारस्य मकारः, जामा. स्व कारणात् । "त्व सानावधि जामयः (ऋ०सं० ६,८,१६,५)'—इति निगमः ॥

(१५) सनाभयः † । 'णह बन्धने (दि०उ०)'; नहो भश्च (उ० ४,१२२)'—इति इञ्-प्रत्ययः भोऽन्तादेशः । नह्यतेऽनया गर्भ इति नाभिः, समाना नाभिरासामिति सनाभयः । ज्योतिर्जनपदेत्यस्मात् सहशब्दस्य सभावः । समाना हि मातुर्नाभिस्तासां, समा नाभिः मूलमासामिति । "सनाभयो वाजिनं मूर्जयन्ति (ऋ०सं०७,१,२५,४)"—इति निगमः ॥

---

* पु० १,१२। पृ० १४४ पं० १०।

† निरु० ६,११।

(१६) योक्त्राणि *। (१७) योजनानि †। 'युजिर् योगे (रु० उ०)'। 'द म्नीशसयुयुजस्तुदसि (३,२,१८२)'—इति ष्ट्रन् प्रत्ययः पूर्वेण। 'युच् बहुलम् (उ०२,७४)'—इति युच्। युञ्जन्ति पदार्थानाभिरिति, युक्ता वा हस्तेन संयम्यते याभिः क्षेत्रादय इति वा। शब्दस्वाभाव्यात् नपुंसकलिङ्गता। "दशयोक्त्रेभ्यो दशयोजनेभ्यः (ऋ०सं०८,४,३०,२)"—इति निगमः॥

(१८) धुरः ‡। धूर्वतिर्वधकर्मणः (निघ०२,१८) कर्त्तरि क्विपि (३,२,१७७), राल्लोप (६,४,२१)' इति व लोपे रेफस्य विसर्जनीय', जसि धुरः। धूर्वन्ति घ्नन्त्युपघ्नन्ति कर्माणीत्यर्थः। हिंसन्ति परानाभिरिति वा। धारयतेर्वा औणादिके क्विपि बाहुलकात् आकारस्य उकारः। अङ्गुल्या हि धर्यं सुवर्णादि धारयति। 'दश धुरो दश युक्ता वहद्भ्यः (ऋ०सं०८,४,३०,२"—इति निगमः॥

(१९) शाखाः §। 'शाखृ व्याप्तौ (भ्वा०प०)'; अस्मात् अच्-प्रत्यये विकृते 'अशोतेडित्,—इति यीभोजदेवेन ख-प्रत्यये शाख-शब्दो व्युत्पादितः। व्याप्त हि सर्वम्। ख शब्दाधिकरणे उपपदे शेतेः 'अधिकरणे शेतेः (३,२,१५)'—इति अच्-प्रत्ययः। अङ्गुल्यो हि हस्ताग्रभागवात् खे आकाशे शेरते व्यवतिष्ठन्ते, आकाशस्थावकाशरूपत्वात् उपपन्नं हि तत्र शयनम्। खशयाः सत्यः पृषोदरादित्वात् (६,३,१०९) यकारलोपेन शकारकारयोः सवर्णदीर्घत्वे खशा इति भवति, शकारस्य अवर्णव्यत्यय नविनिमय', टाप्; शाखा। शक्नोतेर्वा पचाद्यचि (३,१,१३४ उपधादीर्घः, ककारस्य खकारः।

*, †, ‡ — निघ० २,९। § निघ० १, ५ ६, ११।

शक्नुवन्ति हि ता अङ्गुलयः पुस्तकादि धारयितुं कार्याणि कर्त्तुं वा । यद्वा; 'शाखृ व्याप्तौ (भू०प०)', पचाद्यच् (३,१,१३४) । शाखन्ति व्याप्नुवन्ति कर्माणि । यद्वा; 'शीङ् स्वप्ने (अदा०आ०); अस्मात् 'हृचावयवाश्च'— इति ख-प्रत्ययो बाहुलकात् हस्तावयवेऽपि भवति । शेरतेऽवतिष्ठन्ते आसु नख दयः इति शाखाः । 'श्यतेरिच्च वा'—इति श्रीभोजदेवः; ख-प्रत्ययोऽधिकृतः; इकारादेशस्य विकल्पितत्वात् पक्षे शाखानिष्पत्त्या —–— शाखास्थानीयत्वाद्वा शाखा इष्यन्ते तथाचामरसिंह —'अङ्गुल्य करशाखाः स्युः (२, ६,८२)'—इति । 'हस्ताभ्या दशशाखाभ्याम् (ऋ०सं०८,७,२५,७)"—इति निगम ॥

(२०) अभीशव.*। व्याख्याता रश्मिनामसु (३ पृ०)। अश्नुवते कर्माणि, अभोश्नते वा कर्माणि कर्त्तुम् । "दशाभीशुभ्यो अर्चता जरेभ्यः (ऋ०सं०८,४,३०,२)" इति निगम ॥

(२१) दीधितयः † । व्याख्याता रश्मिनामसु (३८पृ०) । अङ्गुरीयकादिधारणाद् दीप्यन्ते । दीव्यन्ति क्रीडन्त्याभिरिति वा दधातेर्व्युत्पन्नो दीधिति शब्दः । "अग्नि नरो दीधितिभिररण्योः (ऋ०सं०५,१,२३,१)"—इनि निगम ॥

(२२) गभस्तय. ‡ । व्याख्याता रश्मिनामसु (३७पृ०) । गृह्णन्ति पदार्थानाभिः पुरुषा इति गभस्तयः । "दीप्यते मधो रंशुगभस्तिभि ( ? )"—इति निगम ॥

"सुहस्त्याः"—इति केचित् ।

---

* पु० १, ५ । पृ० ३७ प० १६ ।    † पु० १, ५ । पृ० ३८ प० ४ ।

‡ पु० १, ५ । पृ० ३८ पु० १५ ।

एतस्य स्थाने "सस्रुतः"—इति च केचित् पठन्ति। तास्र व्याख्याता नदीनामसु (१४४पृ०)। संसरन्ति सह गच्छन्ति कर्माणि प्रति सङ्गता वा। स्पष्ट-निगमदर्शन विमर्शयः॥

इति द्वाविंशतिरङ्गुलिनामानि॥ ५॥

वश्मि[1]। उश्मसि[2]। वेति[3]। वेनति[4]। वेसति[5]। वाञ्छति[6]। वष्टि[7]। वनोति[8]। जुषते[9]। हर्यति[10]। आचके[11]। उशिक्[12]। मन्यते[13]। छन्त्सत्[14]। चाकनत्[15]। चकमानः[16]। कनति[17]। कानिषत्[18]। इत्यष्टादश कान्तिकर्माणः *॥ ६॥

'कान्तिकर्माणः (निरु०२,८)' = इच्छार्था धातवः—

(१) वश्मि †। 'वश कान्तौ' अदादिः परस्मैपदी। लडुत्तमैकवचनम्। "तदहं वश्मि पवमान तं मे (ऋ०सं०७,४,६,४)"—इति निगमः॥

---

(२) इतोऽनन्तरम् "वावेति"—इत्यधिकं ग C D F ङ पुस्तकेषु।

(५) "विसति" ख। "वेशति" च। टीकाकृतापि पाठान्तरतया स्वीकृतम्।

(७) 'वेष्टि' ङ।

(१०) इतोऽनन्तरम् "ईयति"—इत्यधिकम् ख पुस्तके।

(११) "चचके" ख ग, C. D. F. पुस्तकेषु नास्त्येवेदम् पदम्।

(१३) "मंन्यते" ङ।  (१४) "छन्तसत्" C. D. F ङ पुस्तकेषु।

* "इति कान्तिकर्माण." ग।

† निरु० १९, ५।

(२) उश्मसि *। वशेर्लड्‌लमस्तवस्य बहुवचने मसि 'सार्वधातुकमपित् (१,२,४)'—इति ङिद्भावात् 'वचिस्वपि (६,१,१६)'—इत्यादिना सम्प्रसारणम् इदन्तो मसि (७,१,४६)'-इति इकार। "ता वां वास्तून्युश्मसि गमध्यै (ऋ०सं०२ २,२४,६)"—इति निगमः॥

(३) वेति †। 'वी गतिप्रजनकान्त्यसनखादनेषु' अदादिः परस्मैपदी। "वेषि होत्र मुत पोत्रं यजत्रा (ऋ०सं०१,५,२४,४)"—इति निगमः॥

(४) वेनति ‡। नैरुक्तो धातुः। "पुराणा॰ अनु वेनति (ऋ० सं०८,७,२३,१)"—"नसंयामा वि वेनतम् (ऋ०सं० ४,४,१६, २)"—इति निगमौ॥

(५) वेसति। अयमपि नैरुक्तो धातुः। 'वेशति'—इति पाठान्तरम्। निगमदर्शनान्निर्णयः॥

(६) वाञ्छति। 'वाछि इच्छायां' भौवादिकः (प०)। 'विश्वा सर्वा वाञ्छन्तु ऋ०सं०८,८,२१,१)"—इति निगमः॥

(७) वष्टि §। वशे. परस्मैपदमयमुरूपैकवचनम्। "समयौ मा भजति यस्य वष्टि (ऋ सं० १,३,१,३)"—इति निगमः॥

---

* निरु० १, १८ २, ७ ३, ५, १८. ६ १३ ९, २८ १२, ५ ,—४५।

† निरु० १, ७ ५,६ ,—८ ,—१४. ४, १ ,—१८. ९, ४२ ,—४१ १०, १. १२, ४६।

‡ प० १४ ३, १३ ,—१५ ;—१० ३, ४ १०, २८ ११, २८। निरु० १, ७ १०, २८।

§ उ० षष्ठ १।

(८) वनोति। 'वनु याचने' तनादिः (प०). अनेकार्थत्वादात्-नमत कान्त्यर्थः। एव म यचापि। "स्याहं यद्रेक्ण परमं वनोमि नत् ऋ०सं० १,२,२४ ४)" – इति निगमः॥

(९) जुषते *। 'जुषी प्रीतिसेवनयोः' तुदादिरात्मनेपदी, अत्र कान्तिकर्मा। "स पुष्टिं याति जोषमा चिकित्वान् (ऋ०सं० १, ५ २५,५)"- इति निगमः। 'जुषते हर्यति इति पाठात् जोषः कामः'— इति स्कन्दस्वामिभाष्यम्॥

(१०) हर्यते †। 'हर्य गतिकान्त्योः' भ्वादिः परस्मैपदी। "ता जुषाणो हर्यति जातवेदाः (ऋ० सं० ३,८,११,३)"— इति निगमः॥

(११) आचके। 'चक तृप्तौ' भ्वादिरात्मनेपदी; लङ्न्म स-दैकवचनम्। "अनाम्ब्रोज आ चके (ऋ०सं ३,४,९,५,)"—इत्यत्र 'कर्मलिटि उत्तमे इटि मलोपश्छान्दसः'— इति भानुदत्तः। "त्वा मवस्यराचके (ऋ०सं० १,२,१९,४ "—इति निगमः। "यस्ते शतुत्वमाचके (ऋ०सं० ६,३,४,२.५)"—इति तु 'लोपस्त आत्मने-पदेषु (७ १,४१)'। यथादृष्ट पाठः॥

(१२) उशिक् ‡। वष्टेः 'वशः कित् (उ० २ ६८)'-इति इक् प्रत्ययः, कित्त्वात् सम्प्रसारणम्। "उशिक् पावको अरतिः सुमेधाः (ऋ० सं० ७,८,२,९,१)"- इति निगमः॥

---

* निरु० ६, १६. १२, ४२।

† प० २४। निरु० ३, १०. ७, १७. ११, ११।

‡ प० १, १४। निरु० ६, १०।

(१३) मन्यते *। 'मन ज्ञाने' दिवादिरात्मनेपदी। "आवयिथ मन्यमानस्तुरयित् (ऋ०सं ५,४,८,२)"—"यदि मन्येतोपमस्य- मियोदनैः ( ? )" —इति च निगमौ॥

(१४) छन्त्सत् †। 'छदि संवरणे' चुरादिः। पञ्चमलकारः, तिप्, 'लेटोऽडाटौ (३,४,९४)', 'सिब्बहुलं लेटि (३,१,३४)', इतश्च लोपः परस्मैपदेषु (३,४,९७)'। तथा छन्दुर्भवति इयेतः (ऋ०सं० १.४,१९,४)'—इयत्र 'मयो छन्त्सत् चाकनत्' इति कान्ति- कर्मसु पाठात्, 'तदिमे छन्त्सद् वपुषः (ऋ०सं० ७,७,२९,३)'— इति प्रयोगदर्शनाच्च छदि कान्त्यर्थः'—इति स्कन्दस्वामिभाष्यम्। 'दूरेवताय छन्त्सत् (ऋ०सं० २,१,२१,६)"—इति, "अच्छान्त्सुः पञ्चकृष्टयः (ऋ०सं० ८,६,२६,६)"—इति च निगमौ॥

(१५) चाकनत् ‡। 'कनी दीप्तिकान्तिगतिषु (भू०प०); यङ्- लुगन्तः। 'नुगतोऽनुनासिकान्तस्य न भवति, व्यत्ययेन पञ्चमलकारः, 'लेटोऽडाटौ (३,४,९४)', 'इतश्च लोपः परस्मैपदेषु (३,४,९७)'। "ब्रह्मदिन्द्रस्य चाकनत् (ऋ०सं० ६,२,३८,१)" —"ये निः प्रचित चाकनत् ( ? )"—इति च निगमौ॥

(१६) चकमानः। 'चकतृप्तौ' भ्वादिरात्मनेपदी। 'ताच्छील्य- वयोवचनशक्तिषु चानश् (३,२,१२९)'। "चकमानः पिबतु दुग्धमंशुम् (ऋ०सं० ४,२,७,१)"—इति निगमः।

---

* प० ३, १४,—१९। निरु० ३,१ १,८ ४, १५. १, २५ ८, १२ ८, ३५. ११, ३०. ११, ४२।

† प० ३, १४। निरु० ९, ८।

‡ प० ३, ११ ४, १,—३। निरु० ४, १४,—१५. ५, १४।

(१७) कनति * । 'कनी दीप्तिकान्तिगतिषु (भू०प०)' भ्वादिः परस्मैपदी । "भानत् कनति नुदतम् ( ? )"—'इन्द्रः सोमस्य काणुका (ऋ०सं० ६,४,२८,४)"—इति च निगमौ ।

(१८) कानिषत् † । कनतेर्लेटि परस्मैपदप्रथमपुरुषैकवचने सिब्बहुलं लेटि, इडागमः, उपधावृद्धिर्बाहुलकात् इकारलोपः पूर्ववत् । "अग्ने तृतीये सवने हि कानिषः (ऋ०सं० ३,१,२१,५)" —इति निगमः ॥

इत्यष्टादश कान्तिकर्माणो धातवः ॥ ६ ॥

अन्धः[१] । वाजः[२] । पयः[३] । प्रयः[४] । पृक्षः[५] । पितुः[६] । वयः[७] । सिनम्[८] । अवः[९] । क्षु[१०] । धासिः[११] । इरा[१२] । इळा[१३] । इषम्[१४] । ऊर्क्[१५] । रसः[१६] । स्वधा[१७] । अर्कः[१८] । क्षद्म[१९] । नेमः[२०] । ससम्[२१] । नमः[२२] । आयुः[२३] । सूनृता[२४] । ब्रह्म[२५] । वर्चः[२६] । कीलालम्[२७] । यशः[२८] । इत्यष्टाविंशतिरन्ननामानि‡ ॥७॥

---

*, † पुरस्तात् षष्ठे १५ । पृ० २०९ पं०१२ ।

(२) इतोऽनन्तरं "पाथः"—इत्यधिकम् ग C D F पुस्तकेषु ।

(४) "प्रय" — इत्येतन्नास्ति क पुस्तकातिरिक्तेषु, देवराजेन तु "प्रय."— इत्येनास्य विकल्पः स्वीकृतः ।

(७) "वयः" नास्त्येतत् ख. ङ. च पुस्तकेषु । तेषु पुनरस्यैव स्थाने "सुतः"—इति दृश्यते, टीकाकारस्यापि कैश्चिदिप्यायस्य ऽयमतान्तरतोक्ता । ग. C. D F पुस्तकेषु तु "सुतम्" इति । इतोऽनन्तरं "सुत."—इत्यधिकम् क पुस्तके । (८) "सोनम्" ग, ख ।

(११) "चुमत्" ग, क. "चुन्" C. D. F, ख । (१८) नैतद् दृश्यते क-पुस्तके ।

(१९) "चक्ष" ख । (२८) नास्त्येतत् पदं ग, C. D. F पुस्तकेषु । ‡ 'इत्यन्नम्' ग ।

(१) अन्धः * । 'अन्ध इत्यन्ननाम । आध्यानीयं भवति (निरु० ५,१)'—इति भाष्यम् । 'आभिमुख्येन हि ध्यातव्यं सर्वेषामन्नं प्रीतेः शरीरस्थितेश्च तदायत्तत्वात्'—इति स्कन्दस्वामी । आङ्-पूर्वात् ध्यायतेरसुनि बाहुलकात् यकाराकारयोर्लोपः, उपसर्गस्य ह्रस्वत्वं नुडागमश्च धातोः । यद्वा; 'अद भक्षणे (अदा०प०)'—इत्यस्मात् 'अदेर्नुं धश्च (उ० ४,२००)'—इति कर्मणि कर्त्तरि वा कारके असुनि नुमागमो धकारश्चान्तादेशः । अद्यते प्राणिभिः, तान् वा स्वयमत्ति । तथाच श्रुतिः —'अद्यतेऽत्ति च भूतानि (तै०उ० २,२)' —इति । 'अनित्यनेनान्धः'—इति क्षीरस्वामी । अनितेरसुनि बाहुलकात् धुगागमः । अनित्यन्नं हि प्राणनम् । "आमत्रेभि-सिञ्चता मद्य मन्धः (ऋ०सं० २,६,१३,१)"—"इन्द्रेहि मत्स्यन्धसः (ऋ०सं० १,१,१७,१)"—इति च निगमौ ॥

(२) वाजः † । 'वज गतौ (भ्वा०प०)' । 'अकर्त्तरि च कारके सञ्ज्ञायाम् (३,३,१९)'—इति घञ् । 'अजिव्रज्योश्च (७,३,६०)' —इति चकारस्यानुक्तसमुच्चयार्थत्वात् कुत्वाभावः । तथाच तत्र न्यासकारः—'चकारस्यानुक्तसमुच्चयार्थत्वाद्वजेरपि कुत्वप्रतिषेधः सिद्धो भवति वाजः'-इति । निगम्यते अभिगम्यते हि तत्सर्वैः । गच्छ-त्यनेनादत्तेन सुखानि भुक्तेन तृप्तिं वा गच्छत्यनेन शुद्धेन सत्त्वशुद्धिं भोक्ता । यदाहुः—'आहारशुद्धौ सत्त्वशुद्धिरिति' । यद्वाः; गत्यर्था बुद्ध्यर्थाः जानात्यनेन भुक्तेन धर्मम् । 'दश धर्मान् विजानन्ति धृतराष्ट्रनिबोधनात् । मत्तः प्रमत्त उन्मत्तः श्रान्तः क्रुद्धो बुभुक्षितः'

---

* प० ४,२। निरु० ५ १.९, २६ ११,८।

† प० १७। निरु० १०,२२ ११,१६,—१६।

—इति श्रीमहाभारतम् । सर्वत्रान्ननामसु गत्यर्थाद् व्युत्पादितेविव मर्थो बोद्धव्यः । "सुतानां वाजिनीवसू (ऋ॰सं॰ १,१,३,५)"— अन्यत्र "वर्जं हवनष्पदं रथम् (ऋ॰सं॰ १,४,१२,१)"— इति च निगमौ ॥

(३) पयः *। व्याख्यातं रात्रिनामसु पयइत्यत्र (निरु॰ २,५)। यद्वा ; 'अय पय गतौ (भू॰आ॰)'—इत्यस्मादसुन् । पीयते ह्यन्नं। तद्धि चतुर्विधम् पेय-चोष्य-लेह्य-चर्व्यभेदेन। वर्द्धन्ते हि तेन भुक्तेन। जातान्यन्नेन वर्द्धन्ते (तै॰उ॰२,२)' - इति श्रुति। "पयस्वानग्न आगहि (ऋ॰सं १,२,१२,३)"—"यदो मृतस्य पयसा पियानः (ऋ॰सं॰ १,५,२७,३)"—इति च निगमः ॥

(४) प्रयः †। व्याख्यातमुदकनामसु (११७पृ॰)। "उपप्रयोभिरागतम् (ऋ॰सं॰ १,१,३,४)"—"तुराय प्रयोन हर्मि स्तोमं माहिनाय (ऋ॰सं॰ १,४,१७,१)"—"प्रयस्वन्तः प्रति हर्यामसि त्वा (ऋ॰सं॰ ८,६,२१,३)"—इति च निगमाः ॥

(४) श्रवः। 'श्रु श्रवणे (भू॰प॰)'। कर्मण्यसुन् । श्रूयते ह्यन्नं वर्ण्यमानं श्रवो यशः। तद्धर्मात्ताच्छब्द्यं वा। "सत्यमिन्न श्रवस्तमाः ( ? )"—"मर्त्तं दधामि श्रवसे दिवे दिवे (ऋ॰सं॰ १,२, १३,२)"—"अभिश्रव ऋज्यन्तः (ऋ॰सं॰ ४,७,८,३)"—इति च निगमाः। "उप प्रयोभिरागतम् (ऋ॰सं॰ १,१,३,४)"-इत्यादिषु निरुक्त-टीकायां स्कन्दस्वामिना प्रयइत्यन्ननामेत्युच्यते। तथाच 'अचिति श्रवः (ऋ॰सं॰ १,३,२०,४)'—इत्यादि-निगमेषु वेदभाष्ये,

* पृ॰ ११. ९,७। निरु॰ २,५।

† पृ॰ १० । निरु॰ ६, २५. ८, १०. १०, ९ ११, ८ ।

'अव इ.यन्नन म'—इति स्पष्ट मुच्यते। निरुक्त-टीकायान्तूभयथा (निरु० १०,३)। अतः 'प्रय.'–'अव:'-शब्दयो: उभयोरप्यन्ननामत्वं स्पष्टम्। तत्रैकतमस्य पाठो विद्वद्भिर्निर्णीयताम् ॥

(५) पृक्षः *। 'पृची सम्पर्के (रु०प०)'। औणादिके क्विपि धातोः कुगागमः। सम्पृक्तं हि तज्जात्वभिः। पृक्षतिर्दानार्थ इति वा (अदा० आ०)। "वायो तव प्र पृञ्चती (ऋ०सं० १,१,३,३)"–इत्यादौ माधवेनोक्तम्। तत्र क्विपि बाहुलकान्न-लोपः। दीयते ह्यन्नमर्थिभ्यः। "त्रिः पृक्षो अस्मे अक्षरेव पिन्वतम् (ऋ०सं० १,३, ४,४)"—इत्यत्र स्कन्दस्वामिभाष्यम् 'पृक्षा अन्ननामैतत् पठन्ति। "पृक्षो भवन्त वाम् (ऋ०सं० ४,४,१२,३)"—इत्यादिषु बहुवचनान्तस्य सामानाधिकरण्यदर्शनात् बहुवचनान्तं द्रष्टव्यम्'-इति। "अग्निं विश्वा अभि पृक्षः सचन्ते (ऋ०सं० १,५,१६,२)"—"पृक्षो वहतमश्विना (ऋ०सं १,४,२,६)"—इति च निगमौ। "त्वं शर्द्धो मारुतं पृक्ष ईशिषे (ऋ०सं २,५,१८,१)"—इत्यादौ तु षष्ठेयकवचनान्तमपि दृश्यते ॥

(६) पितु †। 'पा रक्षणे (अदा०प०)'। 'कमिमनिजनिभाया-गापाहिभ्यश्च (उ० १,७०)'—इति तु-प्रत्ययो बाहुलकादिकारः। रक्षितव्य ह्यन्नम्। प्यायतेर्बाहुलकात् तु-प्रत्यये धातोः पि-भावश्च। "पितुं नु स्तोषम् (ऋ०सं २,५,६,१)"—"प्रमन्दिने पितुमद-र्चता वचः (ऋ०सं १,७,१२,१)"—इति निगमौ ॥

(७) वयः ‡। 'वी गतिप्रजनकान्त्यशनखादनेषु (अदा०प०)'।

---

* परस्तात् १७। † निरु० ५, ९। निरु० ९, २४।
‡ निरु० ६, ४।

वसुन्। गत्यादिसर्वोऽप्यर्थोऽत्रानुगुणः कारकभेदेन। 'वय गतौ (भू॰आ॰)'-इत्यस्मादसुन् वा। "बृहद्दस्मे वय इन्द्रो दधाति (ऋ॰ सं॰ २,१,१०,२)"—"परि घंसमोमना वां वयोगात (ऋ॰सं॰ ५,५,१६,४)"—इति च निगमौ॥

केचिदस्य स्थाने "सुतः"* इति पठन्ति। तत्र षूञ् प्राणिप्रसवे (अदा॰आ॰)'। 'ततव्रातलातसुत'-इत्यादिना क्त-प्रत्ययः, षूञो ह्रस्वत्वञ्च निपात्यते। सूयते हव्या। "आदित्याज्जायते वृष्टि र्वृष्टे-रन्नं ततः प्रजाः"—इति हि स्मृतिः (मनुः ३,७६)। यद्वा; 'सु षु गतौ (भू॰प॰)'-इत्येतद्-विषयं निपातनम्। निगमोऽन्वेषणीयः॥

(८) सिनम्†। 'षिञ् बन्धने (स्वा॰क्र्या॰उ॰)'। 'इणसिञ्-दीङुष्यविभ्यो नक् (उ॰ ३,२)'। 'सिनाति भूतानि'-इति भाष्यम्। 'सिनाति बध्नाति क्षुधा विनश्यन्ति भूतानि धारयति'-इति, स्कन्द-स्वामी। सीयते अनेनेति वा। अन्नेन हि भृत्यादयो बध्यन्ते। "येन स्मासिनं स्नानं मरथ सखिभ्यः (ऋ॰सं॰ ३,४,८,१)"-इति निगमः॥

(९) अवः‡। 'अव रक्षणगतिप्रीतितृप्त्यवगमप्रवेशश्रवणस्वाम्यर्थयाचनक्रियेच्छादीप्त्यवाप्त्यालिङ्गनहिंसादानभागवृद्धिषु (भू॰प॰)'। असुन्। धात्वर्थेषु योगः सर्वोऽङ्गीकर्तव्यः। "अवत् ब्रह्मणवसा-गमत् ( ? )"—"अग्निर्गिरोऽवसा वेतु धीतिम् (ऋ॰सं॰ १,५,२५,४)"—इति निगमौ॥

(१०) क्षु। 'टु क्षु शब्दे (अदा॰प॰)'—'क्षि निवासगत्योः (तु॰

* निरु॰ ४, १८;—२४। † प॰ ४, २। निरु॰ ५, ५।
‡ निरु॰ १०, ११।

प०)'। 'खनिषूभ्यां डित् उ० १,३२)'—इति विधीयमानौ डित्-कु-प्रत्ययौ बाहुलकादाभ्यामपि भवति। सूयते शस्यते स्तोतृभिः स्तूयते देवतात्वादन्नम् सूक्तादिभिः गुणवत्तया वा लोकैः, निवसथनेन वा। "त्वं वाजस्य श्रुमतो रायईशिषे (ऋ०सं० २,५,१८,५)"—"आ गृ न इन्द्र द्युमन्तम् (ऋ०सं० ६,५,२७,१)"—इति च निगमौ ॥

(११) धासिः। 'वृविवृधिकुपिभ्यः क्सिः (उ० ३,१५१)'—इतिर्बाहुलकात् धाञोऽपि भवति, बाहुलकादेव ईत्वं न भवति। दीयते ऽर्थिभ्यो धारयति प्राणान् वा। "विदद्वसुर्मा तनयाय धासिम् (ऋ०सं० १,५,१,३)"—अत्र 'धासिरन्ननाम, इह तु पयस आसन्नकारणत्वात् गोषु प्रयुक्तः'—इति स्कन्दस्वामी ॥

(१२) इरा। व्याख्यातं नदीनामसु (१४६ पृ० १८ प०) ॥

(१३) इळा*। ईड्यते दीप्यते भुक्तेन जाठरोऽग्निः, क्षिप्यते उदरे, स्वपत्यनेन भुक्तेन हि बुभुक्षितस्य निद्रास्ति। "तस्मा इळां सुवीरा मा यजामहे (ऋ०सं० १,३,२०,४)"—इति निगमः ॥

(१४) इषम्†। 'इषु इच्छायाम् (तु०प०)'। औणादिकः क्विप्। इष्यत इति। यद्वा; इषु गतौ (दि०प०)' क्विप्। वेदे प्रायुर्येण दर्शनाद् द्वितीयैकवचनान्तम्। 'इषं स्तोतृभ्य आभर (ऋ०सं ३, ८,२२,१)"—"अश्विना यज्वरीरिषः (ऋ०सं० १,१,५,१,)"—इति च निगमौ ॥

(१५) ऊर्क्‡। 'ऊर्गित्यन्ननाम। ऊर्जयतीति सतः पक्वं सुप्रवृक्णमिति वा (निरु० ३,८)'—इति भाष्यम्। 'ऊर्जयति' प्रबलति

---

* पुरस्तात् १, १ पृ० १५ प० ६ । † निरु० ६, २६ १०, २६ ११, १७, —२९ ।
‡ निरु० ३, ८ २७, —४२ ११, २९ ।

प्राणयति बलवन्तं प्राणवन्तं वा करोतीत्यर्थः । 'पक्कमिति वा' पक्क-शब्दस्य पकारलोपं कृत्वा क-शब्दं व्यत्यय वकारस्योरि कृते रुगा-गमे चोर्गिति भवति । 'सुप्रहृक्तमिति वा' अथे र-शब्दलोपे कृते, संयोगादिलोपे कृते अकारयोपरि कृकि जत्वे च कृते ऊर्गिति भवति । सुश्लिष्टं हि तद्भवति मृदत्वात्' इति स्कन्दस्वामिग्रन्थः । * * * । 'ऊर्ज्यते प्राण्यते जीव्यतेऽनया' —इति भट्टभास्करमिश्रः । अत्र 'ऊर्ज बलप्राणनयोः (चु०प०)' इत्यस्मादेव करणे क्विप् । "यंसि तनमूर्जं न विश्वध क्षरध्यै (ऋ०सं० १,५,५,२)"—इति निगमः ॥

(१६) रसः* । व्याख्यातमुदकनामसु । "महे यत् पित्र ईं रसं दिवे कः (ऋ०सं० १,५,१५,५)" इति निगमः ॥

(१७) स्वधा † । स्व-शब्दे उपपदे दधातेः (जु०उ०) 'गेहे कः (३,१,१४४)'—इति क-प्रत्ययो बाहुलकाद् भवति । स्वेभ्यो दीयते स्वस्मिन् धीयते वा, स्वेन धनेन धीयते वा । "विश्वा हि माया अवसि स्वधा वः (ऋ०सं ४८,२४,१)"—"आदह स्वधामनु (ऋ०सं० १,१,११,४)"—इति च निगमौ ॥

(१८) अर्कः ‡ ।

(१९) क्षद्म § । व्याख्यातमुदकनामसु (८५पृ०) । क्षुधिवर्तना-दिके स्वकार्ये स्थिरं भवति, स्थिरो भवत्यनेन भुक्तेन भोक्तेति वा

---

* पु० १,११ । पृ० ८० प० ६ । निरु० ११, ९१ ।

† पुस्तान् १, १२ । पृ० १३१ प० ६ ।

‡ प० १०, ४, २ । निरु० ५, ४. ६, २२ । यद्यपीदं पदं टीकापुस्तके व्याख्यातं न दृश्यते, परमष्टाविंशतिमहापूर[illegible] इति ।

§ पुस्तान् १, १२ ।

१ २उ २ १ २ १ १ २

क्षिंस्यतेऽनेनातिभुक्तेनेति वा 'अहमममहमदन्नमद्मि (सा०सं० आ० १,८)"—इति श्रुतिः। माधवपचे घदिरभनार्थः (सौ०), अयमर्थ बुभुचितः। "स्वादु षद्मापो वसनो स्योनकृत् (?)"—इति निगम ॥

(२०) नेम*। 'णीञ् प्रापणे (भू०उ०)'। 'अर्त्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्यो मन् (उ० १,१३७)'। नमयति सुगतिं दातारं, नीयते देहयात्रा अनेनेति वा ॥

"नेमा"—इति नकारान्तं केचित् पठन्ति। तदा बाहुलकादभिधानलक्षणाद्वा नकारस्येत्संज्ञाया अभावः। एवमेवास्मिन् सूत्रे वृत्तिकारेणोक्तम्। यद्वा; मनिनि रूपसिद्धिः। निगमदर्शनान्निर्णयः॥

(२१) सप्म†। 'सम स्वप्ने (अदा०प०)'। पुंसि सञ्ज्ञायां घः प्रायेण (३ ४,११८)। स्वपन्त्यनेन भुक्तेन, न हि क्षुधितस्यातिनिद्रास्ति। "सप्मेन चिदिमदायावहो वसु (ऋ०सं० १,४८,३)"—इति निगम ॥

(२२) नम। 'णमु प्रह्वत्वे (भू०प०)'। असुन्। उपनतं जातमात्रेभ्यो भूतेभ्य पूर्वजन्मकृतकर्मवशात्, नम्यते देवतात्वात्, नमस्यतेन हेतुना तदस्त प्रयोजनस्य च हेतुत्वेन विवक्षा। 'प्र वो महे महि नमो भरध्वम (ऋ०सं० १,५,१,२)'—"एना वो अग्निं नमसा (ऋ०सं० ५ २,२१,१)"—इति च निगमौ॥

(२३) आयुः‡। अनन प्राणममस्ति। "पाहि सदमिद् विश्वायुः (ऋ०सं० १,२,२२,३)"—इति निगम॥

---

* पृ० ३, २६। निरु० ३, २०।
† पृ० ४, २। निरु० ५, १।
‡ पृ० २, २।

(२४) सूनृता*। व्याख्यातमुदकनामसु (५८ पृ०)। सुष्ठु नयन्ति सुप्रयुक्तान् अर्थ्यन्ते वा तदर्थिभिः। यद्वा; शोभना नरः सुनरः 'अन्येषामपि दृश्यते (६,३,१३७)'—इति दीर्घः, सूनृषु तायते विस्तीर्यते पुण्येन, 'अन्येषामपि दृश्यते (६,३,१३७)'—इति दीर्घः। वा टाप्। 'पुरुणीथे जरते सूनृतावान् (ऋ०सं० १,४,२१,७)"—अश्विना सूनृतावती (ऋ०सं० १,२,४,३)"—इति च निगमौ॥

(२५) ब्रह्म †। 'बृहि बृहि वृद्धौ (भू०प०)'। 'बृंहेर्नलोपश्च (उ० ४,१४१)'—इति मनिन्। परिवृढं भवति सर्वप्राणिभिः। सर्वदा भुज्यमानमप्यनुपक्षीयमाणत्वात्, स्वभावतो वा परिवृढं सर्वस्य जगतो भरणात्, वर्धन्तेऽनेन भूतानीति वा 'जातान्यन्नेन वर्धन्ते (तै०उ० २,२)'—इति श्रुतिः। "उप ब्रह्माणि वाघतः (ऋ०सं० १,१,५,५)" - इति च निगमः॥

(२६) वर्चः। 'वर्च दीप्तौ (भू०आ०)'। असुन्। दीप्तिकरं स्वत्वं शरीरादेः। "तमा संसृज वर्चसा (ऋ०सं० १,२ १२,३)"—"सं माग्ने वर्चसा सृज (ऋ०सं १,२ १२,४)"—"मा युषा सह वर्चसा (ऋ०सं ८,३,२७,४)"—इति निगमाः॥

(२७) कीलालम्। 'कल गतौ (प०)'चौरादिकः,'कील बन्धने (भू०प०)', 'कील खण्डने ( ? )'। कील बन्धने इति व्युत्पत्तिमिमादर्थः। कील खंडने इति तु सुच्छेदमित्यर्थः। अपि वा कीला जाठराग्नेर्ज्वाला, तां लाति 'कर्मण्यण् (३.२.१)'। "कीलालपे सोमपृष्ठाय वेधसे (ऋ०सं० ८,४,२२,४)"—इति निगमः॥

---

* पु० १, ८। पृ० ५८ पं० ४।

† प० १०। निरु० १, ८, १७, १४।

(२८) यशः * । व्याख्यातमुदकनामसु (१२३पृ०) । यशो यशो-र्दीप्त्यर्थात् । कीर्त्तिकरं वेति माधवः । तदा सर्व्वम्वदर्थः । "यशो न पक्वं मधुगोष्वन्तरा (ऋ०सं० ८,६,२,५)"—"सुविद्युन्न यशस्वता (ऋ०सं० ३,१,१६,६)"—इति निगमौ ॥

इत्यष्टाविंशतिरन्ननामानि ॥ ७ ॥

आवयति[1] । भर्व्वति[2] । बभस्ति[3] । वेति[4] । वेवेष्टि[5] । अविष्यन्[6] । बप्सति[7] । भसथ.[8] । बब्धाम्[9] । ह्वरति[10] ।

इति दशात्तिकर्माणः † ॥ ८ ॥

(१) आवयति ‡ । आङ्पूर्वात् वेतेः (अदा०प०) 'बहुलं छन्दसि (२,४,७३)'—इति शपो लुगभावः । यद्वा; 'वेञ् तन्तुसन्ताने (उ०)' भ्वादि.; अनेकार्थत्वात् धातूनामत्तिकर्मत्वम् । एवमन्येष्वपि द्रष्टव्यम् । "आ तु न. स वयति गव्यमश्व्यम् (ऋ०स० ६,२,२,१०)"—इति निगमः ॥

(२) भर्व्वति § । भर्व हिंसायाम्' भ्वादिः परस्मैपदी । पृथुज्मनि रश्मु याति भर्व्वन (ऋ०सं० ४,५,८,२)"—"तेन सूभर्वं शतवत् सहस्रम् (ऋ०सं० ८,५,२०,५)"—इति निगमौ ॥

(३) बभस्ति ‖ । 'भस भर्त्सनदीप्त्योः' जुहोत्यादिः परस्मैपदी । "हरी इवान्धांसि बप्सता (ऋ०सं० १,२,२६,२)'—इति निगमः ॥

---

* पुरस्तात् १, १२ । पृ० १२२ प० ८ ।

(१०) "ह्वयति" ग. C D F. क । † "इत्यत्तिकर्माण" ग ।

‡ प० १४ । निरु० १, १७ १०, २०. ११,१८ ।

§ निरु० ८, २२ । ‖ निरु० ५, १२, १२ ८, ११ ।

(४) वेवेष्टि *। 'विप्लृ व्याप्तौ (जु०उ०)'। 'जुहोत्यादिभ्यः श्लुः (२,४,७५)'। "स्वतैदयोयथातिथि ज्योतिष्कृत्या परिवेविष्टि- ( ? )"—यदा त्वा ग्रतिथयः परिवेष्टि ( ? )"— "मरुतः परिवेष्टारः ( ? )"—इति च निगमाः। 'प्रयोजक-व्यापारे प्रयुक्तत्वात् निरूपणीयम् ॥

(५) वेति†। वी गत्यादौ अदादिः परस्मैपदी। "वीतं पातं पयस उस्रियायाः (ऋ०सं० २,२ २३,४)"—इति च निगमः ॥

(६) अविष्यन् ‡। अवतेर्वर्त्तमाने व्यत्ययेन लृट्; लृटः सद्वा। "अविष्यन्तस्तेषु तिष्ठति (ऋ०सं० १.४,२३,२)"—इति निगमः। अत्र च 'अविष्यद्भक्तिकमेत्ता भक्षयन्नित्यर्थः'—इति स्कन्दस्वामी। तस्मादविष्ठादिति पाठो न युक्तः ॥

(७) बप्सति §। भसेः प्रथमपुरुषे बहुवचने 'घसिभसो र्हलि च (६,४,१००)'—इत्युपधालोपे रूपम्। "दृह्निर्वनानि बप्सति (ऋ०सं० ६,२,२८,३)"—इति निगमः ॥

(८) भसथ ‖। भसेर्लट यसि 'बहुलं छन्दसि (२,४,७६)'— इति शपः श्लुर्न भवति। "न देवा भसथयन (ऋ०सं० ४,८, २५,४)"—इति निगमः ॥

(९) बब्धाम् ¶। भसेर्लेटि तसस्तामि श्लौ द्विर्वचनम्, द्विर्वचना-त्त्वानित्यत्वात् उपधालोपः प्राप्नोति छन्दस वात्र. 'घसिभसोर्हलि च (६.४,१००)'—इत्युपधालोपः। 'झि च (८,२,२५)'—इत्यादि-सूत्रेषु मिचो लोप इति पचे सकारलोपश्छान्दसः मकारमात्रलोप

* पु० २, ६। पृ० २०० पं० १६।
† पु० २, ६। पृ० २०७ पं० ६। ‡ पु० अत्रैव १। पृ० २१८।
§, ‖, ¶, पुस्तक अत्रैव २। पृ० २१८।

इति पचे 'झलोझलि (८,१,२६)' इति सलोप', भस्त्वजश्त्वे। बब्धामिति पृथक्पाठे प्रयोजनं मृग्यम्। * * *। "बब्धां ते हरीधाना ( ? )' —इति निगमः॥

(१०) ह्वरति। ह्वृ कौटिल्ये' भूवादिः परस्मैपदी। "अपामतिष्ठद्धरुणह्वरन्तम: (ऋ०सं० १,४,१८,५)"—"उपह्वरे यदुपरा अपिन्वन् (ऋ०सं० १,५,२,१)"—इति निगमौ॥

इति दृष्टान्तकर्माणः॥ ८॥

ओजः[1]। वाजः[अ] पाजः[2]। शवः[3]। तरः[4]। तवः[5]। त्वक्षः[6]। शर्द्धः[7]। बाधः[8]। नृम्णम्[9]। तविषी[10]। शुष्मम् [11]। शुष्णम्[12]। शूषम्[13]। दक्षः[14]। वीळु[15]। च्यौत्नम्[16]। सहः[17]। यहः[18]। वधः[19]। वर्गः[20]। वृजनम्[21]। वृक्[22]। मज्मना[23]। पौंस्यानि[24]। धर्णसि[25]। द्रविणम्[26]। स्यन्द्रासः[27]। शम्बरम्[28]। इत्यष्टाविंशतिर्बलनामानि *॥ ९॥

(१) ओज †। व्याख्यातमुदकनामसु (११९पृ०)। उब्जत्यनेन,

---

(५) "तव' " ख।
(६) "त्वक्ष" ग C.D F, क। (९) "नृम्णम्' इति क।
(१५) "वीळु" ग.C D F। (१६) "वध'—इति क।
(२१) "विट्" ग।
(२५) "धर्णसि" क च पुस्तकयोरन्यत्र", "धर्णसि"—इति क।
* "इति बलस्य" ग। † पुरस्तात् १, १२। पृ० ११९ पं०८।

बलवत्सविधौ हि शत्रवो भवन्ति भीत्या, न्यग्भावयत्यनेन वा शत्रून्। वर्तते ऽनेन ऐश्वर्यादि, वर्तते व्यायामादिना। इमावर्थान्तरावपि तद्धार्थेषु बोद्धव्यौ। 'उर्वधिकम्'—इति माधवः। हिंस्यन्तेऽनेन शत्रवो वा। 'उपेर्जुट् च'—इति श्रीभोजदेवः। असुनि गुणः। ओषति दहति शत्रून्। "ओजसो जातमुतमन्य एनम् (ऋ०सं० ८, २,४,२)"—"वसूनि जाते जनमान ओजसा (ऋ०सं० ६,७, ३,२)"—इति निगमौ॥

(२) वाजः *। व्याख्यातमन्ननामसु (२११पृ०)। गच्छन्त्यनेन शत्रून् प्रति जिगीषवः। गम्यतेऽधिगम्यते व्यायामादिना यत्नेन। इमावर्थावुत्तरत्रापि गत्यर्थेषु बोद्धव्यौ। 'वाजोबलं, वाजयतेः प्रेरणार्थात्'—इति माधवः। अनेन शत्रून् प्रेरयति विद्रावयतीति। 'परिवाजेषु भूषथः (ऋ०सं० २,१,१२,४)"—इति निगमः॥

(३) पाजः †। 'पा रक्षणे (अदा०प०)'। 'पातेर्जुट् च'-इत्यसुन् बलेन हिंस्यते सर्वम्। 'कृणुष्व पाजः प्रसितिं न पृथ्वीम् (ऋ० सं० ३,४,२३,१)"—इति निगमः। 'समिद्धस्य रुशददर्शि पाजः (ऋ०सं० ३,८,१२,२)"—इत्यत्र स्कन्दस्वामिना 'पाजो बलम्'—इत्येतावदेवोक्तं न तु बलनामेति वाजशब्दे तु 'परिवाजेषु भूषथः (ऋ०सं० २,१,१२,३)' इत्यत्र बलनामैतदित्युक्तं, 'अत्यं न मिहे वि नयन्ति वाजिनम् (ऋ०सं० १,५,७,१,)'—इत्यत्र, 'अत्यं न वाजं हवनस्यदं रथम् (ऋ०सं० १,४,११,१)' – इत्यादौ च ऋक्भाष्ये वाजशब्दोपरि 'अपि बलनाम'—इत्युच्यते। अतो वाज-

---

* पु० २,७। पृ० २११ प० ११।

† पु० २,७। पृ० २११ प० २१।

पांजग्रस्योरुभयोरपि बलनामत्व स्पष्टम्; तत्रैकतमस्य पाठो विद्भिरधीयताम् ॥

(३) अव *। व्याख्यातमुदकनामसु (११८पृ॰)। "मा मेम - अ।सस्मते (ऋ॰सं॰ १,१,२१,२)"—इति निगमः ॥

(४) तरः। 'तॄ प्लवनतरणयोः (भू॰प॰)'; असुन्। तरत्यनेन आपदम्। "यावत्तरो मघवन् यावदोजः (ऋ॰स॰ १,२,३,२)"—इति निगमः ॥

(५) तवः। तवतिर्बलार्थे; असुन्। 'अपादमिन्द्र तवसा जघन्थ (ऋ॰सं ३,२ २,३)'— 'योगेयोगे तवस्तरम् (ऋ॰सं॰ १,२,२८,२)" —इति च निगमौ ॥

(६) त्वक्ष। 'तक्ष तनूकरणे (भू॰प॰)'; असुन्। तनूक्रियन्ते ऽनेन शत्रवः। "स प्र रिक्वो त्वक्षसा क्ष्मो दिवश्च (ऋ॰ सं॰ १,७,१०,५)"—इति निगमः ॥

(७) शर्धः। 'शर्धतिरुत्साहार्थः'—इति स्कन्दस्वामी; असुन्। शत्रुजयादावनेन उत्साहितत्वात्। 'अभ्राजि शर्धो मरुतो यदर्णसम् (ऋ॰स॰ ४,२,१५,६)" - इति निगम ॥

(८) बाधः†। बाधृ विलोडने (भू॰आ॰); अकर्त्तरि च कारके सञ्ज्ञायाम् (३,३,१९)' – इति घञ्। बाध्यतेऽनेन शत्रवः। निगमोऽन्वेषणीयः ॥

(९) नृम्णम् ‡। 'नृम्णं * * * नॄन् नतम् (निरु॰ ११,९)'—

* पृ॰ ३, ११ पृ॰ ११८ प॰ १२।
† निरु॰ ९, १५ १०, ९।
‡ प॰ १०। निरु॰ १०, १० ११, ९।

इति भाष्यम् । ननु गत्रुभूतान् प्रति नमति ; स्वार्थो वा नमिः,नमयति प्रह्वीकरोति'—इति स्कन्दस्वामी । 'इन्द्रे नृम्णं हि ते शवः (ऋ० सं० १,५ २९,३)'—इत्यत्र ऋक्भाष्ये—'यस्माच्छत्रुभूतानां मनुष्याणामपि नमनकरणं तव बलम्'— इति । स एव तत्र पृषोदरादित्वेन नृ नमन-शब्द य वर्णलोपादो नृम्णमिति द्रष्टव्यम् । 'अभी नृम्णं च रोदसी सपर्यत (ऋ०सं० ८,१,८,१)" "महि प्रवस्तुविनृम्णम् (ऋ०सं० १,२,२७,१)"— इति च निगमौ ॥

(१०) तविषी* । तविः सौत्रो धातुर्वृद्धार्थः । तवेष्टिषन् प्रत्ययः । टित्त्वात् ङीप् । कृणा रजांसि तविषीं दधानः (ऋ० सं० १,३, ६,४)"—"युष्माकमस्तु तविषी पनीयसी (ऋ०सं० १,३,१८,२)"—इति निगमौ ॥

(११) शुष्मम्† । 'शुष शोषणे (दि०प०)' । 'अविसिविसिशुषिभ्यः कित् (उ० १,१४१ )'—इति मन् प्रत्ययः । शुष्यत्यनेनारिः । 'शुषिः प्रीणनार्थः —इति माधवः । प्रियं हि बलम् । 'शुष्ममिति बलनाम शोषयतीति सतः (निरु० २,२४)'—इति भाष्यम् । 'परस्परमीयामितमपि बलं विशोषयति उपशोषयतीत्यर्थः' – इति स्कन्दस्वामी । तत्र शोषयतेर्मनिन् 'बहुलमन्यत्रापि सञ्ज्ञाच्छन्दसोः' —इति लुक् । "शुष्मा इन्द्रमवाता अह्रुतप्सवः (ऋ०सं० १.४, १२,४)"—"यस्य शुष्माद्रोदसी अभ्यसेताम् (ऋ०सं० २,६,७,१)" —इति निगमौ ॥

---

* निरु० ८,२३ ।

† निरु० २,२४, २, २१ १०, १० ।

(१२) शुष्णम् * ।

(१३) शूषम् † । 'शुष गोषणे (दि०प०)' । पूषशुषकलुषका-ष्यपर्गेलूषादयः'—इत्यादिग्रहणात् 'उषः प्रत्यूषादयोऽपि भवन्ति'—इति दण्डनाथ-वृत्तिः । अयमव्ययष्टिलोपश्च निपात्यते शुष्कवदर्थः । "इन्द्राय शूष मर्चति (ऋ० सं० १,१,१८,५)"—इनतमः सत्वभि यौह शूषैः (ऋ० सं० ३,३,१३,२)"—इति निगमौ ॥

(१४) दक्षः ‡ । 'दक्ष वृद्धौ च (भू०आ०)' चकाराद् हृष्टौ । 'दक्ष गतिहिंसनयोः (चु० घ० प०)' । 'दर्शातिरुत्साहार्थः'—इति स्कन्दस्वामी । असुन् । शत्रुविजये क्षिप्रो भवत्यनेन, हिंस्यन्ते वा ऽनेन शत्रवः, प्रोत्साहितो वा भवति शत्रुविजये । "मित्रं हुवे पूतदक्षम् (ऋ० सं० १,१,४,२)'—इति भाष्ये स्कन्दस्वामी—'दक्ष इति सकारान्तं बलनाम' । अकारान्तमपि तस्यैवमर्थान्तरे द्रष्टव्यम् । "जज्ञाना पूतदक्षसा (ऋ० सं १,२,८,४)"—इति निगमः ॥

(१५) वीळु । वीलयति सस्तम्भकर्मा । भृमृशीङ्तृचरित्सरित-निधनिमिमस्जिभ्य उः (उ० १,७)'—इति उ-प्रत्ययो बाहुलका-दस्मादपि भवति । संस्तब्धो दृढो भवति अनेन, संस्तभ्यन्ते ऽनेन शत्रव इति वा । निगमोऽन्वेषणीयः ॥

(१६) च्यौत्नम् । 'च्युङ् गतौ (भू० आ०) । * * * । अन्तर्णीतण्यर्थो वा । च्यवन्ति च्यावयन्ति शत्रूननेन राज्यात् ।

* निरु० ३, ११. ४, १६ ६, १८ ।

† पा० ३, ८ ।

‡ निरु० ११२, ३ १५, १६ ।

"प्रचोदेन मघवा सत्यराधाः (ऋ० सं० ८,१,८,६)"—इति निगमः ॥

(१७) सहः *। 'षह मर्षणे (भू० आ० ), छन्दस्यभिभवार्थः। असुन्। सहत्यनेन शत्रून्। "ये सहांसि सहसा सहन्ते (ऋ०सं० ५,१,८,४)"—इति निगमः ॥

(१८) यहः †। व्याख्यानमुदकनामसु (११८पृ०)। प्राप्यते आहूयते वानेन शत्रुः। निगमोऽन्वेषणीयः ॥

(१९) वधः ‡। 'हन हिंसागत्योः (भू० प०)। 'हनश्च वधः (३,३,७,६)'—इत्यप्। हन्यतेऽनेन शत्रुः। निगमोऽन्वेषणीयः ॥

(२०) वर्गः। (२१) वृजनं §। (२२) वृक्। 'वृजी वर्जने (रु० प०)'। घञ्। 'कृपृवृजिमन्द्रिनिधाञ्भ्यः क्युः (उ० २,७६)', 'क्विप् च (३,२,७६)'। वर्ज्यतेऽनेन प्राणैः। "जरयन्ती वृजनं पद्वदीयते (ऋ० सं० १,४,३,५)"—प्रतीचीनं वृजनं दोहसे गिरा (ऋ० सं० ४,२,२३,१)"—इति च निगमौ ॥ माधवस्तु—'मध्यादयोस्तु वृजन वर्त्तते बलयुद्धयोः। "वृजनेन वृजिनान्त्संपिपेष (ऋ० सं० ३,२,१६,१)"—"त्वं यथा वृजने पृत्सु धाणौ (ऋ० सं० १,५,४,२)"—"जरयन्ती वृजनं (ऋ० सं० १,४,३,५)' तु वर्त्तते उपद्रवे'—इति। सदाऽन्वेषणीयौ निगमौ ॥

(२३) मज्मना। 'टु मस्जो शुद्धौ (तु० प०)। औणादिको मनिन् (उ० ४,१४०)। 'झलां जश् झशि (८,४,५३)', कुत्वम्,

* पु० १, ११। पृ० ११८ प० ७।
† पु० १, १२। पृ० ११६ प० ५।
‡ प० २०। § प० ६, २१। निरु० ५, ८।

तृतीयैकवचनम् । मज्जयति शत्रून् । "नाभा पृथिव्या भुवनस्य मज्मना (ऋ० सं० २,२,१२,४)"—"स द्युम्नानि समिधानि मज्मना (ऋ० सं० १,४,१८,५)"–"वि रोदसी मज्मना बाधते शव. (ऋ० सं० १,४,१०,५)"– इति निगमा. । निगमेषु तृतीयैकवचनान्तस्य प्रायशोदर्शनात् तदन्तः पठितः ।

(२४) पौंस्यानि *। 'पुंस अभिवर्द्धने (प०) चुरादिः । 'भव्यादयश्च (उ० ४,१०८)'—इति यत्-प्रत्ययान्तेषु निपातितेषु द्रष्टव्यः । "पौंस्यानि नियुतः सश्चुरिन्द्रम् (ऋ० सं० ४,७,८,२)" —"यस्मिन् विश्वानि पौंस्या (ऋ० सं० १,१,१०,४)"—"महद्-महदस्य पौंस्यम् (ऋ० सं० १,५,३०,५)"– इति निगम ॥

(२५) धर्णसि । 'धृञ् धारणे (भू० उ०)' । "सानसिवर्णसिपर्णसि (उ० ४,१०४)"—इत्यसि-प्रत्ययोनुसागमोऽपि निपात्यते गुण. । भ्रियतेऽनेन राज्यादि । निगमोऽन्वेषणीय· ॥

(२६) द्रविणम् †। द्रु गतौ (भू० प०)' । द्रुदक्षिभ्यामिनन् (उ० २,५२)' । 'सनो ददातु द्रविणम् ( ? )"—इति निगम. ॥

(२७) स्यन्द्रास । 'स्यदि किञ्चिच्चलने (भू० आ०)' । 'ऋज्रेन्द्राग्रवज्रविप्रकुब्रचुब्रक्षुरखुरभद्रोग्रभेरभेलशुक्लशुक्लगौरवम्रेरामालाः'—'स्फायितञ्चिवञ्चिशकिक्षिपिक्षुदिसृपितृपिदृपिवन्द्युन्दिश्वितिवृत्यजिनीपदिमदिमुदिखिदिछिदिभिदिमन्दिचन्दिदहिदसिदम्भिवसिवाशिशीङ्हसिसिधिशुभिभ्यो रक्'— रन्धसिलिन्म्रे भ्रपुंड्गीव्रशीम्रगोरेन्द्राभद्रस्यन्द्रकुलीरादयः'- इति रन्-प्रत्ययान्तो निपात्यते । तस्मात् जसेरसुक् (७,१,५०) । स्यन्दतेऽनेन शत्रून् । निगमोऽन्वेषणीयः ॥

---

* प० १७ ।

† प० १० । निरु० ८, ११

(२८) शम्बरम् *। व्याख्यातमुदकनामसु (१३२पृ०)। संव्रियतेऽनेन शत्रुः, संवृणोतीति वा तत्वत श्यापदम्। शमनमुपद्रवाणा मुत्कृष्टं च युद्धादौ, शम्बेनेन्द्रेणादीयते वा। बलाधिदेवताह्यीन्द्रः। 'या च का च बलकृतिरिन्द्रकर्मैव तत् (निरु० ७,१०)'—इति भाष्यम् निगमोऽन्वेषणीयः॥

इत्यष्टाविंशतिर्बलनामानि ॥ ९ ॥

मघम्[1]। रेक्णः[2]। रिक्थम्[3]। वेदः[4]। वरिवः[5]। श्वात्रम्[6]। रत्नम्[7]। रयिः[8]। क्षत्रम्[9]। भगः[10]। मीळ्हुम्[11]। गयः[12]। द्युम्नम्[13]। इन्द्रियम्[14]। वसु[15]। रायः[16]। राधः[17]। भोजनम्[18]। तना[19]। नृम्णम्[20]। बन्धुः[21]। मेधा[22]। यशः[23]। ब्रह्म[24]। द्रविणम्[25]। श्रवः[26]। वृत्रम्[27]। ऋतम्[28]। इत्यष्टाविंशतिरेव धननामानि †॥ १० ॥

---

* पु० १, १० । पृ० १३१ प० १६ ।

(११) "मीढम्" क ।

(१३) "गयः । शुम्नम् । द्युम्नम्"—इति, "तना । बन्धु"—इति च ग. C. D F, ख ।

(२१) इतोऽनन्तर "शवः"—इत्यधिक ग, छ ।

(२८) "वृत्तम्"—इति ग. iid । "वित्तम्"—इति च टीकाकृता दृष्टमेव वैदुषितं, पर न तत्साकल्यतम् ।

† "इत्यष्टाविंशतिर्धननामानि" च० । "इति धनस्य" ख० ।

(१) मघम् *। मंहतिर्दानकर्मा (प० ३,२०,१०)। 'घजर्थे क-विधानम् (३,३,५८ वा०)'—इत्यत्र परिगणितस्य प्रायिकत्वात् क-प्रत्यये पृषोदरादित्वात् लोपो हकारस्य घकारश्च। दीयतेऽर्थिभ्यः। "तेभिरिन्द्रं चोदय दातवे मघम् (ऋ०सं० ७,२,२३,५)"—"यदिन्द्र दक्षिणा मघोनी (ऋ० सं० २, ६, ६, ६)"—इति निगमौ॥

(२) रेक्णः †। 'रिचिर् विरेचने (रु० उ०)'। 'रिचे र्धने घिच (उ० ४,१८४)'—इत्यसुन्, नुडागमो गुणश्च, घित्वात् 'चजो: कुघिण्यतो: (७,३,५२)'—इति कुत्वम्। 'रेक्ण इति धननाम रिच्यते प्रयतः (निरु० ३,२)'—इति भाष्यम्। रिच्यते अवतिष्ठते प्रयतः म्रियमाणस्य धनं धनिना सह न म्रियत इत्यर्थः। 'रेक्णोधनं रिचेः प्रेरणार्थस्'—इति माधव। प्रेर्यतेऽनेन दत्तेन भृत्यादिः कर्मसु। "आहिं यद्रेक्णः परमं वनोषि तत् (ऋ० सं० १,२,२४,४)" "परिषद्यं ह्यरणस्य रेक्णः (ऋ०सं० ५,२,६,२)"—इति च निगमौ॥

(३) रिक्थम् ‡। रिचेः (रु०उ०) 'पातृतुदिवचिरिचिसिचिभ्यस्थक् (उ० २,६)'—इति थक्। पूर्ववदर्थः। "न जामये तान्वोरिक्थमारैक् (ऋ० सं० ३,२,५,२)"—इति निगमः॥

(४) वेदः। 'विद्लृ लाभे (चदा०प०)'। असुन्। विदन्त्येतत्,

---

* निरु० १, ७ ३ १० ३, १६।
† निरु० ३, २।　　‡ निरु० ३ ६।

लभ्यते वाऽनेन धर्मादिः। "होतारं विश्ववेदसम् (ऋ० सं० १,१,२२.१)"—इति निगमः॥

(५) वरिवः। 'वृञ् वरणे (स्वा०उ०)', अस्माद् यङ्लुगन्तात् असुनि बाहुलकादिलोपः। भृशं व्रियते, वरिवसो हेतुत्वद्वा वरिवः 'वित्तं बन्धु र्वयः कर्म विद्या भवति पञ्चमी। एतानि मान्य-स्थानानि गरीयोयद्यदुत्तरम् (२,१३६)'—इति मनुः। "युधा देवेभ्यो वरिवश्चकर्थ (ऋ० सं० १,४,२५,५)"—"मंहीराजन् पूर्वेकः (ऋ० सं० १,५,५,२)"—इति निगमौ॥

(६) श्वात्रम् *। आशुशब्द उपपदे 'अत सातत्यगमने (भू०प०)' —इत्यस्मात् 'आदित्यचिदसि'-इति क्तप्रत्ययः; पृषोदरादित्वेन आशुशब्दस्य श्वुत्पत्स्यते; यणादेश-सवर्णदीर्घौ। आशु अतति आशु गच्छति, चञ्चलं हि धनम्। निगमोऽन्वेषणीयः॥

(७) रत्नम् †। 'रमु क्रीडायाम (भू०आ०)', 'रमेस्त च (उ० ३,१२)'—इति न-प्रत्ययस्तकारश्चान्तादेशः। रमणीयं हि तत्। 'रमतेऽस्मिन्'—इति क्षीरस्वामी। 'वित्ते रमस्व बहु मन्यमानः'—इति श्रुतिः। "धा रत्नं महि स्थूरं बृहन्तम् (ऋ० सं० ४,६,८,५)"—"होतारं रत्नधातमम् (ऋ० सं० १,१, १,१)"—इति निगमौ॥

(८) रयिः ‡। व्याख्यातमुदकनामसु (१२८पृ०)। गम्यते प्राप्यते पुरुषेण गच्छत्यनेन तृप्तिं भोगसाधनत्वाद्, यशो वाऽऽदत्ते,

* प० २, १०. ४, २। निरु० ५, १।   † निरु० ७, १३।
‡ उ० ६, १२। ३० १२८ प० ३।

दीयते ऽर्थिभ्य इति वा । 'अग्निना रयिमश्नवत् ( ऋ० सं० १, १, १, ३ )" - इति निगमः ॥

(९) क्षत्रम् *। व्याख्यातमुदकनामसु (१२० पृ०)। पूर्वजन्मसुकृतवशेन तद्धति स्थिरं भवति, रक्ष्यते उपभोगसाधनत्वात्, छिनत्ति दारिद्र्यम्। गतावपि शब्दवदर्थः। क्षतात् पापात् त्रायते। क्षत्रशब्दात् त्रायतेश्च पृषोदरादित्वात् क्षत्रम्। धनैरेव पापं नरा निस्तरन्तीत्युच्यते। "न हि ते क्षत्रं न सहो न मन्युम् (ऋ० सं० १,२,१,१)"— "सुक्षत्रासो रिशादसः ( ऋ० सं० १,१,२६,५)"—इति च निगमौ ॥

(१०) भग. † । 'भज सेवायाम् (भू०उ०)'। 'पुंसि सञ्ज्ञायां घः प्रायेण (३,३,११८)', 'चजोः कु घिण्यतोः (७,३,५२)'। भज्यते सेव्यते भोगार्थिभिः। यद्वा सेव्यतेऽनेन हेतुना तद्वान्। भगशब्दः पुंल्लिङ्गोधनवचन। "शिवास्तोऽश्व्यो मातिधन्भगो नः (ऋ० सं० २,६,६,६)"—'अदित —श्चोभग ( ? )"—इति निगमौ ॥

(११) मीळ्हम् ‡। 'मिह सेचने (भू०प०)'। * * *। ढत्व-धत्व-ष्टुत्व-ढलोप दीर्घाः, ळ्हकार भावश्च। सिच्यतेऽर्थिभ्योदातृभिः। 'सहस्तमोळ्हुष्टमशिवेनमा ? इत्यत्र भट्टभास्करमिश्रभाष्येऽपि 'मोळ्हु इति धननाम—इति दृश्यते। ततो निष्कृष्य उकारान्तनिगमदर्शनाभावात् अकारान्तनिगमदर्शनात्

* पु० १, ११। पृ० १२० प० ८।

† प० ५, ६। निरु० १, ७ २ १० ६ ११ ८, ११ १२ ११।

‡ प० १०।

उकारान्ताकारान्तयोरपि खीकारोऽस्माकम् । "रुद्रस्य ये मीळ्हुषः सन्ति पुत्राः (ऋ० सं० ५,१,७,३)" — "तां वां रुद्रस्य मीळ्हुषः (ऋ० सं० ५,४,२८,५)" इत्यादौ निर्वाहकत्वात् "मीळ्हुम्" — इति पठितव्यमिति केचिदाहुः । अन्ये तु "मीळ्हः" इति सकारान्तमपि * * * । तेषां मीळ्हांसमिति निर्वाहः । उभयेषामपि "सहस्व मीळ्हे (ऋ०सं० १,७,३४,५)"—इत्यकारान्तस्य पाठोऽपेक्षणीयः । बहुभ्यस्तु निर्णयः ॥

(१२) गय *। व्याख्यातमपत्यनामसु (१८१पृ०) । इहापि तदर्थः । गीयते स्तूयते स्तोतृभिः । "अपस्वहासुपेगयम् (ऋ० सं० १;५,२१,२)—इति निगमः ॥

(१३) द्युम्नम् †। 'द्युम्नसुम्ननिम्न'—इत्यादिना 'द्युत दीप्तौ (भू०आ०)'—इत्यस्मात् न-प्रत्ययो मकारश्चान्तादेशो निपात्यते । तेन महान् । दीप्यते द्युम्नम् । 'द्यु अभिगमने (अदा० प०)'—इति क्षीरस्वामी । अत्र धातोर्मगागमो निपात्यते । "द्युम्नं सहस्रसातमम् (ऋ० सं० १,१,१८,३)"—"द्युम्ना वाजेभिरागतम् ( ? )" — इति च निगमौ ॥

(१४) इन्द्रियम् । 'इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति वा (५.२.९३)'—इति घ-प्रत्ययान्तमन्तोदात्तं निपात्यते । इन्द्रः—'इदि परमैश्वर्ये (भू०प०)', परमैश्वर्ययुक्त उच्यते । इन्द्रस्य लिङ्गम् । अनेन हि ऐश्वर्ययुक्त इति व्यज्यते । अत्र

* पृ० २ । पृ० १८१ प० ४ ।

† प० ३, २ । निरु० ४, ५ ।

षडी, समर्थात्; लिङ्गार्थे घञ्। यद्वा; इन्द्रेण दृष्टम् इन्द्रियम्। यद्वा; इन्द्र आत्मा तत्कृतेन शुभाशुभेन कर्मणा सृष्टम्। इन्द्रजुष्टं वा; आत्मना सेवितम्, तद्द्वारेण भोगोत्पत्तेः। इन्द्रदत्तं वा, इन्द्रेण पूर्वकर्मणा वा अभ्युपदत्तम्। सृष्ट-जुष्ट-दत्तार्थेषु तृतीया समर्थात्। 'दक्षिणं पादमवनेनिजेऽस्मिन्‌-इन्द्रियं दधामि (ऐ० ब्रा० ८,५,४)'—इति निगम ॥

(१५) वसुः * रात्रिनामसु "वस्तो"—इत्यत्र व्याख्यातम्। वस्ते आच्छादयति तिरोभावयति दारिद्र्यम्। * * *। "अह्नं वसुन पूर्व्यः ति (ऋ० सं० ८, १, ५, १)"—इति निगमः॥

(१६ राय †। 'रा दाने (अदा० प०)'। 'गतेर्डैः (उ० २, ६२)'। जस्। दीयतेऽर्थिभ्यः, तदेव प्राप्यते वा पूर्वकृतेन पुण्येन। 'अनानृणः कुविद दस्य रायं. (ऋ० सं० १, २, १, १)" इति निगमः॥

(१७) राधः ‡। राध साध संसिद्धौ (स्वा० प०)'।' असुन्। 'राध्नुवन्ति साध्नुवन्ति धर्मादीन् पुरुषार्थान्'—इति स्कन्दस्वामी। राध्यतेऽनेन धर्मादिरिति वा। रातिर्हिंसार्थोऽपि। छिनत्ति दारिद्र्यम्। 'राध इन्द्र वरेण्यम् (ऋ० सं० १, १, १७, ५)'—'रात्रस्तन्नो विदद्वसो (ऋ० स० ४, २, १०, १)" —इति निगमो॥

---

* पृ० १ ७। १० ४८ प० ४।
† निरु० ६, २, ५, ७।　　‡ निरु० ४, ४ ११, २५।

(१८) भोजनम् *। 'भुज पालनाभ्यवहारयोः (रु० प०)', ल्युट् 'कृत्यल्युटो बहुलम् (३, ३, ११३)' इति। यद्वा; अभिमतार्थं भवति भुज्यते तदर्थिः, भुज्यन्तेऽनेन विषयाः इति वा, पाल्यतेऽनेन वा। "शत्रूयतामा भरा भोजनानि (ऋ० सं० ३, ८, १८, ५)"—"मा नः प्रिया भोजनानि प्र मोषीः (ऋ० सं० १, ७, १८, २)"—इति निगमौ॥

(१९) तना। 'तनु विस्तारे (त० प०)'। पचाद्यच् (३, १, १३४)। तनोति विस्तारयति त्रिवर्गसाधनं हि धनम्। तृतीयैकवचनस्य 'सुपां सुलुक् (७, १, ३९)'—इत्याकारः। "मा वो विक्षयन्ते तना गिरा (ऋ० सं० ६, ३, २५, १)"—"मा वो मक्षू तनाय कम् (ऋ० सं० १, ३, १९, २)"—इति निगमौ॥

(२०) नृम्णम् †। व्याख्यातं बलनामसु (२२२ पृ०)। नमति प्रह्वीकरोत्यर्थिभ्यः तद् वसु। 'हस्ते दधानो नृम्णा विश्वा न (ऋ० सं० १, ५, ११, २)"—इति निगमः॥

(२१) बन्धुः ‡। 'बन्ध बन्धने (क्र्या० प०)'। "शॄस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च'—इति उ-प्रत्ययः बध्नात्यनेन भृत्यादीन्। यद्वा; बन्धुरिव बन्धुः। "अबन्धुना सयवसोपजग्मुषः (ऋ० सं० १, ४, १६, ४)"—इति निगमः॥

---

* निरु० ४, ५।

† पृ० ५। पृ० २२२ पं० २०।

‡ निरु० ४, १।

(२२) मेधा *। 'मिधृ मेधृ सङ्गमे च (भू० उ० )' चकारात् हिंसामेधयोश्च। 'मिधिः सङ्गयर्थः'—इति माधवः। घञ्। सङ्गच्छतेऽनेन सर्वं तद्वता, हिंस्यते वा तद्वान् चौरादिभिः 'हन्ति चैवार्थकारणात्'—इति महाभारतम्। यद्वा; मतौ धीयते अर्जयितव्यं रक्षितव्यं दातव्यमिति धनवता बुद्धौ धार्यते। तत्र मति-शब्दे उपपदे धातोः 'घञर्थे क-विधानम् (३, ३, ५८ वा० )"—इति कः, पृषोदरादित्वात् (६, ३, १०९) मतिशब्दस्य मे-भावः। मेधाकारं विदथस्य प्रसाधनम् (ऋ० सं० ८, ४, २१, ३ )"—इति निगमः॥

(२३) यशः †। व्याख्यातमन्ननामसु (२१९ पृ० )। "उत त्या मे यशसा श्वेतनायै (ऋ० सं० २, १, १, ४ )"—इति निगमः॥

(२४) ब्रह्म ‡। व्याख्यातमन्ननामसु (२१८ पृ०)। वर्द्धन्तेऽनेन धर्मादयः, बृंहकं वा भोगानाम्। "अस्माकं ब्रह्म पृतनासु सह्याः (ऋ० सं० २, २, २२, ७ )"—इति निगमः॥

(२५) द्रविणम् §। व्याख्यातं बलनामसु (२२० पृ० )। रयिवदर्थः। "त मा यजन्तं द्रविणं समश्नवै ( ? )"—इति निगमः॥

(२६) श्रवः ‖। व्याख्यातमन्ननामसु (२१२ पृ० )। "अश्मे

---

* निघ० ३, १९।

† पु० १, १२। पृ० २११ पं० ८।

‡ पु० ७। पृ० २१८ पं० ७।

§ पु० ९। पृ० २२० पं० १६।    ‖ पु० ७। पृ० २१२ पं० १५।

पृथुयवो हृवत (ऋ० सं० १, १, १८, २ )"—"हृवश्चत्वा असुरो-वर्णाकृतः (ऋ० सं० १, ४, १७, ५ )"—इति निगमौ ॥

(२७) वृषम् * । व्याख्यातं मेघनामसु (७७ पृ० )। आच्छादयति दारिद्र्यम्, आच्छाद्यते वा राजतः करादिभयात्। गत्यर्थे रयिवदर्थः। वृषौ ब्रह्मवदर्थः। 'वृषं पुरुकुत्साय रन्धीः (ऋ० सं० २, ४, १६, २ )"—इति निगमः। अत्र स्कन्दस्वामिना 'वृषं धननाम'—इति व्याख्यातत्वात् केषुचित् कोशेषु दृश्यमानमपि "त्रिसम्"—इति न पठनीयम् ॥

(२८) वृतम्। 'वृङ् सम्भक्तौ (क्र्या० प०)'। 'दुतनिभ्यां दीर्घश्च वा (उ० ३, ८७)'—इति चकारस्यानुक्तसमुच्चयार्थत्वात् क्त-प्रत्ययः। सम्भज्यते सर्वैः। "वृतञ्चयः सहुरिर्विक्ष्वारितः (ऋ० सं० २, ६, २७, ३ )"—इति निगमः ॥

इत्यष्टाविंशतिरेव धननामानि ॥ १० ॥

अघ्न्या(१)। उस्रा(२)। उस्रिया(३)। अही(४)। मही(५)। अदितिः(६)। इळा(७)। जगती(८)। शक्वरी(९)। इति नव गोनामानि † ॥ ११ ॥

(१) अघ्न्या ‡। 'अहन्तव्या भवत्यघघ्नीति वा (निरु० ११, ४३)'—इति भाष्यम्। अघस्य दुर्भिक्षादेर्हन्त्री वा अह-

* पु० १, १०। पृ० ७७ प० १८।
(३) उस्त्रिया-इति ख। (६) 'अदितिः" ग, ङ।
† इति यावत्। ‡ प० ५, ३। निरु० ११, ४३।

त्रया। अथ गब्दे मणि वा उपपदे हन्तेः 'अघ्न्यादयश्च (उ० ४, १०८)'—इति यत्-प्रत्ययान्तं निपात्यते। 'नहि मे अस्त्यघ्न्या (ऋ० सं० ६, ७, १२, ४)"—"अघि द्वय अघ्न्ये विषदानीं (ऋ० सं० २, ३, २१, ५)"— इति निगमौ॥

(२) उस्रा *। व्याख्यातं रश्मिनामसु (३८ पृ०)। वसति क्षीरादि हविरस्याम्। 'उस्रियेति। गो-नामोत्स्राविणोऽस्यां भोगा उस्रेति च'—इति (निरु० ४, १८) भाष्यम्। 'उत्स्राविणोऽस्या भोगास्ते जहूं स्रवन्ति गच्छन्ति क्षीरदधिनवनीतक्रमेण'—इति स्कन्दस्वामी। "मयोभू वातो अभिवातूस्राः (ऋ० सं० ८, ८, २७, १)"—"उस्र. पितेव जारयायि यज्ञैः (ऋ० स० ४, ५, १४, ४)" इति च निगमौ॥

(३) उस्रिया †। उस्र-शब्दात् पृषोदरादित्वेन स्वार्थे घ। अर्थ. पूर्ववत्। "अविद्र उस्रिया अनु (ऋ० सं० १, १, ११, ५)"—'समुस्रियाभि र्वावशन्त नर (ऋ० सं० १, ५, १, ३)"—इति च निगमौ॥

(४) अह्री ‡। अहिशब्दो व्याख्यातो मेघनामसु (७४पृ०) 'कृदिकारात् (४, १, ४५ वा०)'-इति ङीप्। गम्यतेऽनया क्षीरादि हविः, गम्यते दत्तया पुण्यम्; अंहति शृङ्गादिना मनुष्यान्, न हन्तव्या वा। निगमो ऽन्वेषणीय। "इंधियासो अह्रो र

* पुरस्तात् १, ५। १० १८ प० १४।
† निरु० ४, १८।
‡ प० १, १०।

नवारवः (ऋ० सं० ७, ३, २, ३ )"—इति भाष्यं द्रष्टव्यम् ॥

(५) मही *, (६) अदितिः †, (७) इळा ‡। व्याख्यातानि पृथिवीनामसु (१३-१४-१५ पृ०)। तत्र अतेः क्षिति, अतिखति (४, ७, ४० )'—इतीक्षे दितिः; नञ्-समासः। इत्यदिति-शब्दस्य व्युत्पत्तिः। मह्यते पूज्यते सर्वदेवतात्मकत्वात् उपभोगसाधनत्वाद्वा। मह्यन्तेऽनया देवाः पय आदीनां हविषां तदायत्तत्वात्। "देवाय याभिर्यजते ददाति च ( ? )"—इति श्रुतिः। पुनः पुनः दुह्यमानापि न क्षीयते। न च्यति, अखण्डनीया वा। ईड्यते स्तूयते देवत्वात् दीव्यते वा चारुतया। गम्यते तदर्थिभिरिति वा। 'महीनां पयोऽसि (य० वा० सं० ४, ३ )"—इति, "अदित एहि सरस्वत्येहि (य० वा० सं० ३८, २)"—इति, "समिद्धा समिळाभिरा (ऋ० सं० १, ४, ५, ६ )"—"इडे रन्ते हव्ये काम्ये (य० वा० सं० ८, ४३ )"—इति च निगमाः ॥

(८) जगती §। मनुष्यनामसु "जगतः"—इत्यत्र व्याख्यातम् (१८१ पृ०)। गच्छ। 'उगितश्च (४, १, ६ )'—इति ङीप्। गम्यते तदर्थिभिः। जगत्या छन्दसा आहार्यत्वाद् अत्राहार्याहरणयोरभेदेन वा जगती। "जगता हि पशवो जगती हि

* पु० १, १। पृ० १३ प० १६।
† पु० १, १। पृ० १४ प० १८।
‡ पु० १, १। पृ० १५ प० ८।
§ पु० १, । पृ० १८१ प० ८।

तामनाहरत् ( ? )"—इति हि ब्राह्मणम् । "आगताः पशवः (ऐ० ब्रा० ४, १, ३ )"—इति च । 'समीपधयोरसेन स रेवतीर्जगतोभिः ( ? )"—इति निगमः * ॥

(९) शक्करी † । व्याख्यातं वाङ्नामसु (१८८ पृ०) । शक्नोति क्षीरादिप्रदानेन तद्वन्तं प्रीणयितुं स्पर्शनेन वा पापमपनेतुम् । शक्करीशब्दस्यस्यादभेदेन वा शक्करी । "पशवो वै शक्वर्यः पशूनेवावरुन्धते ( ? )"—इति श्रुतिः । निगमोऽन्वेषणीयः ॥

इति नव गोनामानि ॥ ११ ॥

रेळते(१) । हेळते(२) । भामते(३) । हृणीयते(४) । क्रौणाति(५) । भ्रेषति(६) । दोधति(७) । वनुष्यति(८) । कम्पते(९) । भोजतः(१०) । इति दश क्रुध्यतिकर्माणः ‡ ॥ १२ ॥

(१) रेळते । अयं नैरुक्तो धातुः । 'अरेळता मनसा देवानां पतेत् ( ? )"—इति निगमः ॥

(२) हेळते । 'हेडृ अनादरे क्रोधे च' भ्वादिरात्मनेपदी । "अहेळमानोररिवां अजाय (ऋ० सं० २, २, २, ४ )"—"अहेळमानो वरुणेह बोधि (ऋ० सं० १, २, १५. १ )"—इति निगमौ ॥

* ऋ० सं० २ २, १७ ४ दृष्टव्योऽपरनिगमः । † पृ० ४ । ‡० १८८ पृ० ६ ।
(४) "भ्रवीयते' कातिचित्पुस्तकेषु सर्वत्र । ‡ 'इति क्रोधस्य" क ।

(३) भामते। 'भाम क्रोधे' भ्वादिरात्मनेपदी। "देव जुष्टोच्यते भामिनेगीः (ऋ० सं० १, ५, २५, १)"—"स्वयभूर्भामो अभिमातिषाहः (ऋ० सं० ८, ३, १८, ४ )"—इति निगमौ॥

(४) हृणीयते। 'हृणीङ् रोषे वैमनस्ये च' कण्ड्वादिः। "पुनः प्रायच्छदहृणीयमानः (ऋ० सं० ८, ६, ७, २ )"—"हृणीयमानो अप हिमदैयेः (ऋ० सं० ३, ८, १५, २ )"—इति निगमौ॥

(५) भ्रीणाति। 'भ्री भये' क्र्यादिः परस्मैपदी। अनेकार्थत्वात् क्रुध्यतिकर्मा। एवमुत्तरत्रापि। "एनः कृण्वन्तमसुर भ्रीणन्ति (ऋ० सं० २. ७, १०, २ )"—इति निगमः॥

(६) भ्रेषति। 'भ्रेषृ चलने' भ्वादिः स्वरितेत्। निगमोऽन्वेषणीयः॥

(७) दोधति। नैरुक्तोधातुः। "इन्द्रो वृत्रस्य दोधतः (ऋ० सं० १, ५, २८, ५ )"—इति निगमः॥

(८) वनुष्यति *। 'वनुष्यतिर्हन्तिकर्मा (निरु० ५, २ )'—इयत्र स्कन्दस्वामी—वनोतेः कण्ड्वादिप्रक्षेपात् यक्-प्रत्ययः, तत्संयोगेन च वनुभावो द्रष्टव्यः'—इति। निगमोऽन्वेषणीयः †॥

(९) कम्पते। 'कपि चलने' भ्वादिरात्मनेपदी। निगमोऽन्वेषणीयः।

---

* प० ४, २। निरु० ५, २।

† "दीर्घप्रयज्युमति यो वनुष्यति (ऋ० सं० ४, ६, २, १ )"

—इति निगम उद्धार्यः।

(१०) भोजते । 'भुज कौटिल्ये' तुदादिः परस्मैपदी । 'छन्दस्युभयथा (३, ४, ११७)'—इत्यार्द्धधातुकत्वात् गुणः । व्यत्ययेनात्मनेपदम् । निगमोऽन्वेषणीयः * ॥

इति दश क्रुध्यतिकर्माणः ॥ १२ ॥

हेळः(१) । हरः(२) । घृणिः(३) । त्यजः(४) । भामः(५) । रोह्ळः(६) । ह्वरः(७) । तपुषी(८) । जूर्णिः(९) । मन्युः(१०) । व्यथिः(११) । इत्येकादश क्रोधनामानि † ॥ १३ ॥

(१) हेळः । हेलतेः भावे असुन् । "देवस्य हेळोऽव यासिसीष्ठाः (ऋ० सं० ३, ४, १२, ४)"—इति निगमः ॥

(२) हरः ‡ । 'हृञ् हरणे ( भू० उ० )' असुन् । हरति कृत्याकृत्यविवेकं, ह्रियते वाऽनेन पुरुषः स्ववशम् ; दुर्नयोऽन्तरः शत्रुः क्रोधः । निगमोऽन्वेषणीयः § ॥

(३) घृणिः ‖ । ज्वलन्नामसु व्याख्यातम् (१६७पृ० ११पं०) । घरत्यनेन स्वेदादिः, दीप्यतेऽनेन वा ; क्रुद्धोऽग्निरिव ज्वलति हि

---

* ऋ० सं० १, ५, १८, २ द्रष्टव्य ।

(३) "घृणि" सर्वत्र कालिरिनेषु ।

(६) रार्ड—इति ख ।          (७) "ह्वर" C D F, ख ।

† "इति क्रोधस्य" ग ।

‡ पृ० १, १७ । पृ० २६७ पं० १० ।

§ का० सं० ८, ३, ६, ५—का० सं० ८, ८, १६, ९—इमे श्रुती विचार्ये ।

‖ पृ० १, ८ । पृ० ६१ पं० ७ ।

प्रसिद्धः। "आहृंणि संसंचावद्धे (ऋ० सं० ४, ८, २१, १)"—इति निगमः। "मा हृणानस्य ( ऋ० सं० १, २, १६, २ )"—इत्यत्र भाष्ये 'हृणिरिति क्रोधनामसु पाठात् हरति क्रोधार्थोऽपि गम्यते' —इति स्कन्दस्वामी, तत् कथमिति विचिन्त्यम् ॥

(४) त्यजः। 'त्यज हानौ (भू० प०)'। असुन्। त्यज्यते सत्पुरुषैः, त्यज्यन्तेऽनेन प्राणाः इति वा, त्यज्यते वा स्वधर्मः। "क्रुद्धः पापं किन्न कुर्यात् क्रुद्धो हन्यात् गुरूनपि। क्रुद्धः परुषया वाचा नरः साधूनपि चिपेत्"—इति हि महाभारतम्। "महश्चिदसि त्यजसो वरूता (ऋ० सं० २,४,८,१ )"—"किं देवेषु त्यज एनश्च कर्थ (ऋ० सं० ८, ३, १४, ७)"—इति निगमौ ॥

(५) भामः। भामतेर्भावे घञ्। यद्वा 'भा दीप्तौ ( अदा० प०)'। 'अर्त्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्यो मन् ( उ० १, १३७ )'—इति मन्। दीप्यते तेन तद्वान्। "देवजुष्टोच्यते भामिने गीः (ऋ० सं० १, ५, २५, १)"—"स्वयभूर्भामो अभिमातिषाहः (ऋ० सं० ८, ३, १७, ४)"—इति निगमौ ॥

(६) एहः। 'हन हिंसागत्योः (अदा० प०)' असुन्। 'नञि हन एह च (उ० ४, २१८)' इति नञुपपदे विधीयमान एहादेशो बाहुलकात् नञ्-विनापि भवति। "अनेहसस्ते हरिवो अभिष्टौ (ऋ० सं० ८, १, ३०, २)"—इति निगमः॥

(७) ह्वरः। 'ह्वृ कौटिल्ये (भू० प०)' अत्तिकर्मा च। असुन्। ह्वरति कुटिलो भवत्यनेन असि वा। * * * ॥

(८) तपुषी *। * * * ॥

(९) जूर्णिः †। 'जूर्णिर्जवतेर्वा द्रवतेर्वा जीर्यतेर्वा ‡'—इति भाष्यम् (निरु० ६, ४)। * * *। गच्छत्यनेन दुःखं, लोकगर्हां वा, छिनत्ति परान् वा। निगमोऽन्वेषणीयः § ॥

(१०) मन्युः ‖। 'मन ज्ञाने (तना० आ०)'। 'यजिमनिशुन्धिदसिजनिभ्यो युच् (उ० ३,१८)'—इति युच्। बाहुलकादनादेशाभावः। ज्ञायते त्वाज्यत्वेन। यद्वा; मन्यतेर्दीप्तिकर्मणो युच्। दीप्यतेऽनेन तद्वान्। "न हि ते' क्षत्रं न सहो' ने मन्युम् (ऋ० सं० १, २, १४, १)"—"आ हृणानस्य मन्यवे (ऋ० सं० १, २, १६, २)"—इति निगमौ॥

(११) व्यथिः। 'व्यथ भयचलनयोः (भ्वा० आ०)'। 'इन् सर्वधातुभ्यः (उ० ४, ११४)'—इति इन्। बिभेत्यस्मात् सज्जनः, चलति वानेन स्वधर्मात्। "पतविभिरश्रमैरव्यथिभिः (ऋ० सं० ५, ५, १६, ७)"—"मा्वि मार्किष्टे व्यथिरा दंधर्षीत् (ऋ० सं० ३, ४, २३, ३)"—इति च निगमौ॥

इत्येकादश क्रोधनामानि॥ १३॥

---

* निरु० ६, १ "तपुषि"।

† प० १५; ४, १। निरु० ६, ४।

‡ मत्रिबद्धपुस्तके तु 'जीर्यते र्वा'—इत्येतस्य स्थाने 'दूणोतेर्वा'—इति दृश्यते।

§ "विद्या जूर्णिमे इयति (ऋ० सं० २, ६, १७, १)"—इत्ययं निगम इति स्वीकृत एव यास्केन।

‖ प० ५, ४ निरु० १०, २९।

वर्त्तते(१) । अयते(२) । लोटते(३)। लोठते(४)। स्यन्दते(५)। कसति(६) । सर्पति(७) । स्यमति(८) । स्रवति(९) । स्रंसति(१०) । प्लवति(११) । स्रोतति(१२) । ध्वंसति(१३) । वेनति(१४)। मार्ष्टि(१५)। भुरण्यति(१६)। ग्रवति(१७)। कालयति(१८) । पेलयति(१९) । कण्टति(२०) । पिस्यति(२१) । विस्यति(२२)। मिस्यति(२३)। प्रवते(२४) । प्लवते(२५) । च्यवते(२६) । कवते(२७) । गवते(२८) । नवते(२९) । क्षोदति(३०)। नक्षति(३१) । सक्षति(३२) । स्यक्षति(३३) । सक्षति(३४) । ऋच्छति(३५) । तुरीयति(३६) । चतति(३७) । अतति(३८) । गाति(३९) । इयक्षति(४०) । सश्चति(४१)। त्सरति(४२)। रंह-

(५) "स्यन्दति" ग C. D. F, ङ ।
(१०) "स्रंसते"—इति पाठश्च ङ ।
(११) "प्लवति" इह नास्ति, परस्तात् (२५) पाठभेदेन दृश्यते ग. C. D. F.
(२५) "प्लवते" ग. C. D. F, ङ ।
(३२) इतोऽनन्तरमेव "इयक्षति (४०)" ग. C. D F ।
(३३) "मियक्षति" ग C. D F, ङ ।
(३४) इतोऽनन्तरम् "सचति"—इत्यधिकम् ग. C D. F, ङ ।
(३७) "चतति (३७)" स्थाने "त्सरति (४२)" ग. C D. F ।
(३९) "गाति (१११)" स्थाने "पतति (११४)" ग. C. D. F ।
(४०) "इयक्षति" इति गत पुरस्तात् (३२), इत्यस्य स्थाने "चतति (३७)" ग. D ।
(४२) गतमिदं पुरस्तात् (३७) ग C. F ।

ति[४३]। यतंते[४४]। भ्रमंति[४५]। भ्रजंति[४६]। रजंति[४७]। लजंति[४८]। चियंति[४९]। धमंति[५०]। मिनाति[५१]। ऋणवंति[५२]। ऋणोति[५३]। स्वरंति[५४]। सिसंति[५५]। विषिंष्टि[५६]। योषिंष्टि[५७]। रिणाति[५८]। रीयंते[५९]। रेजंति[६०]। दृप्यंति[६१]। दभ्नोति[६२]। युध्यंति[६३]। धन्वंति[६४]। मरुषति[६५]। चायंति[६६]। सीयंते[६७]।

---

(४४) नास्त्येवैतत् ग. C. D. F।

(४९) इतोऽनन्तरमिव "धमति (५०)" ग. C. D F।

(५०) गतमिद पुरस्तात् (४९) ग. C. D F।

(५१) "मिनोति"—इत्यपि टीकाद्यसम्मतम्। एतस्यैव स्थाने "चिणोति"—इति ग. C. D F. क। (५२) "रिणवति" F, छ।

(५३), (५४) इह न स एव इमे ग. C. D F।

(५६) "वेविष्टि" ख च. C. D. F। "वेविष्टि" ङ, छ।

(५७) "योविष्टि" ख, छ।

(५८) "श्रणाति" D. F, छ। इतोऽनन्तरमिह "रयति" ग D. F "श्रयति" C, छ इहैव "इयर्ति (७८)"—इत्यपि ग. C. D. F।

(६०) "भेदति" ग C. D. F।

(६१) "दभ्यति" ग F, छ। इतोऽनन्तरं "नभ्यति"—इत्यधिकश्च।

(६२) "दभ्नोति" ग C. D F, छ।

(६३) "युध्यते ग C D F, छ।

(६५) "चवयति" ख च टीकादिसम्मतमपि। "चरंति" ग C. D. F, छ।

(६६) "चलयंति" ग D F। "चनयंति" C, छ।

(६७) "सीयते" चातिरिक्तसर्वपुस्तकेषु।

तक्कति(६८)। दीयति(६९)। ईषति(७०)। फणति(७१)। ह्वलं-ति(७२)। अर्दति(७३)। मर्दति(७४)। सस्रते(७५)। नसते(७६)। हर्यति(७७)। हूयति(७८)। ईर्त्ते(७९)। ईङ्खते(८०)। च्यवति(८१)। ध्राजति(८२)। गन्ति(८३)। आगनीगन्ति(८४)। जङ्गन्ति(८५)। जिन्वति(८६)। जसति(८७)। गमति(८८)। भ्रति(८९)। ध्राति(९०)। ध्रयति(९१)। वहते(९२)। रथर्यति(९३)। जेहते(९४)। द्वः-

(६८) "दीयते" ग C. D. F, ख। (७१) "कथति" C. D. F, ख।
(७२) "ह्वलति" ग C. D. F। (७३) "हिसति" ग. C. D. F।
(७४) "मदति" ग C. D. F। (७५) "धावति" ग C. D. F।
(७६) "हस्यति" ग. C. D. F। "हस्रति"—इति ख।
(७७) "हयति" ग. C. D. F।
(७८) गतमिदं पुरस्तात् (५८) ग. C. D. F।
(८०) एतदपि नास्त्येव ग. C. D. F। "ईङ्गति"—इति ख।
(८४) "गनीगन्ति" ग. C. D. F। "आगनीगन्ति"—इत्यपि पुरस्तादस्ति (११२) ग. C. D. F। (८५) "जगन्ति"—इति ख।
(८६) "जगाति" ग C. D. F। "जिन्वति"—इति ख।
(८७) "जगति" ग. C. D. F।
(८८) इतोऽनन्तरम् "मिनाति (११)" ग. C. D. F।
(८९) "भुवति" ग. C. D. F। "भवति"—इति ख। इतोऽनन्तरं "वक्ष्यति" ग C. D. F।
(९३) "चर्यति" ग C. D F, ख। इतोऽनन्तरम् "ईहते" ग. C. D. F।
(९४) "जेहति" ग C, ख। इतोऽनन्तरम्—"वहति"। "एति (१२०)"। "सूर्यति"। "पतति (१०१)"। वहति (१०३)"।

कांति[९५]। चुम्पति[९६]। म्नाति[९७]। वाति[९८]। याति[९९]। इषति[१००]। द्राति[१०१]। दूळति[१०२]। एजति[१०३]। जमति[१०४]। जवति[१०५]। वञ्चति[१०६]। अनिति[१०७]। पवते[१०८]। हन्ति[१०९]। सेधति[११०]। अगन्[१११]। अजगन्[११२]। जिगाति[११३]। पतति[११४]। दून्वति[११५]। द्रमति[११६]। द्रवति[११७]। वेति[११८]। हन्तात्[११९]। एति[१२०]। जगायात्[१२१]। अयथुः[१२२]। इति द्वाविंशशतं गतिकर्माणः * ॥ १४ ॥

---

(९५) "चकति" ग D, F। "च्यकति" C, क।

(९६) "चिम्पति" ख घ, क।

(१००) "जायति" ग C D F, क।

(१०१) "पतयति" ग C. D. F, क।

(१०२), (१०३), (१०४) (१०५) (१०६), (१०७),—इमानीह न सन्ति ग, C. D, F।

(१०८) "प्रवति" D, क।

(११२) इतोऽनन्तरम्—"भागमीगन्ति (८४)"। "याति (३९)" ग C, D F।

(११४) गतमिदं पुरस्तात् पाठभेदेन (३९) ग C D F।

(११५) "वजति" ग C D F।

(११७) "दूवति" C D. F। इतोऽनन्तरम्—"दुम्नति (१०२)" ग C D F।

(११९) "हयन्तात्"—इति सर्वत्रैव, पर टीकायामप्राधान्येन स्वीकृतम्।

(१२०) गतमिदं पुरस्तात् (९७) ग C. D F।

(१२२) "अयुयु" ख ङ च। "अयुथु" ग. C. D F, क।

* "इति गतिकर्माण" ग।

अत्र वर्त्तते इत्यादीनां गत्यर्थानां गतिकर्मकत्वं स्कन्दस्वामिना प्रतिपादितम्। अनेकार्थत्वाद्वा गतिकर्मत्वम्। एष्वप्रदर्शितनिगमानां निगमा अन्वेषणीयाः। अनुक्तविकरणानां भ्वादित्वं ज्ञेयम्, अनुक्तौ परस्मैपदित्वञ्च ॥

(१) वर्त्तते *। 'वृतु वर्त्तने (भ्वा०)' आत्मनेपदी ॥

(२) अयते †। (३) लोटते। (४) लोठते ॥

(५) स्यन्दते। 'स्यन्दू प्रस्रवणे (भ्वा०)'। आत्मनेपदी। "स्यन्दन्तां कुल्या विषिताः पुरस्तात् (ऋ० सं० ४, ४, २८, ३)"—इति निगमः ॥

(६) कसति। 'कस गतौ (अदा० प०)'।

(७) सर्पति‡। 'सृप्लृ गतौ (भ्वा० प०)'। "नमो अस्तु सर्पेभ्यः ( ? )"—"अहिर्न जूर्णामति सर्पति त्वचम् ( ऋ० सं० ७, ३, २०, ४ )"—इति निगमौ ॥

(८) स्यमति।

(९) स्रवति। 'स्रु गतौ ( भ्वा० प० )'। "अवंस्रवेदघशंसो वतरम् (ऋ० सं० १, १, १७, १)"—इति निगमः ॥

(१०) स्रंसते 'स्रंसु अवस्रंसने (भ्वा०)' आत्मनेपदी। "जातिम् जातमति स प्र स्रंसते (ऋ० सं० २, ७, ४, १)"—इति निगमः। 'स्रमनिरस्तर्णीतप्यर्थः'—इति हरदत्तः ॥

---

* निरु० ६, ८; १०, २१।

† निरु० ४, १६, ७, ३१; ८, २; ६, १३; ६, ३२; १०, १८; १२, १, १२, १०।

‡ निरु० ६, १०।

(११) अयति * । 'अव रक्षणगत्यादौ (भू० प०)' "प्रावन् वाणीः पुरुहूतं धमन्तीः (ऋ० सं० ३,२,२,५)"—"तं घेदग्निर्वृधावति (ऋ० सं० ६, ५, २६, ४)"—इति निगमौ ॥

(१२) चौतति † । 'श्चुतिर् क्षरणे (भू० प०)' । "श्चोतन्ति ते वसो स्तोकाः ( ऋ० सं० ३, १, २१, ५)"—इति निगमः ॥

(१३) ध्वंसति ‡ ।

(१४) वेनति § । नैरुक्तधातुः । "आ प्र द्रव हरिवो मा वि वेनः ( ऋ० सं० ४, १, २८, २ )"—"नासत्या मा वि वेनतम् (ऋ० सं० ४, ४, १६, २)"—इति निगमौ ॥

(१५) मार्ष्टि ‖ । 'मृज शुद्धौ' अदादिः । "मृगो न भीमः ( ऋ० सं० २, २, २४, २ )"—"उरावन्तरिक्षे मर्जयन्त (ऋ० सं० ५, ४, ६, ३ )"—इति निगमौ ॥

(१६) भुरण्यति ¶ । 'भुरण धारणपोषणयोः' कण्ड्वादिः । "भुरण्यन्तं जनाँ अनु (ऋ० सं० १,४,८,१)"—"शुचिर्वां स्तोमो भुरणावजीगः ( ऋ० सं० ०, ७, २२, १ )"—इति च निगमौ ॥

---

* पु० ८ । पृ० २१८ प० ६ ।
† निरु० ५, ११ ।
‡ निरु० ४, ३ ।
§ पु० ८ । पृ० २०७ प० ६ ।
‖ निरु० १, २० , १२, ४१ ।
¶ निरु० १२, २९ ।

(१७) शवति*। 'शव गतौ'। 'शु गतौ'—इति स्कन्दस्वामी। "मा मेम शवसस्पते (ऋ० सं० १, ११, २१, २)"—इति निगमः॥

(१८) कालयति †। 'काल क्षेपे' चुरादिरदन्तः। व्यत्ययेन स्थानिवद्भावाद्वृद्धिः। "तं काले कालमागते यते ( ? ‡ )"—इति निगमः। 'कालः कालयतेर्गतिकर्मणः (निरु० २, २५)'—इति यास्कः॥

(१९) पेलयति §। 'पेल्ट फेल्ट शेल्ट गतौ ( भू० प० )'। "वयांसि पक्षा मन्थेन पिपीलिकाः प्रसाद ( ? ‖ )"—इति निगमः। 'पिपीलिका पेलतेर्गतिकर्मणः (निरु० ७, १३)'—इति यास्कः॥

(२०) कण्टति ¶। 'कटि गतौ (भू० प०)'। "यातुधानीभ्य कण्टकीकारीम् (य० वा० सं० ३०,८)"—इति निगमः। 'कण्टकः कन्तपो वा कृन्ततेर्वा कण्टतेर्वा स्याद् गतिकर्मणः इति निरुक्तम् (८, ३२)। 'कण्टति पश्यति परान्'—इति स्कन्दस्वामी॥

---

* प० १, ५। निरु० ९, २; ३, ८; ४, १३।

† निरु० २, २५।

‡ अथ० सं० १९, ५३—५४. सूक्तद्वयं द्रष्टव्यम्। श० ब्रा० ७, ८, ३. अत्र च।

§ निरु० ७, १३।

‖ ऋ० सं० ७, ९, २१, १. विचार्यं। अथ० सं० ७, ५६, ७ द्रष्टव्य।

¶ निरु० ८, ३२।

(२१) पिस्यति। 'पिस्ट पेसृ गतौ (भू० प०)'। व्यत्ययेन श्यन् ॥

(२२) विस्यति *। (२३) मिस्यति। "विस प्रेरणे", 'मसी परिमाणे' दिवादिः। मिस्यतीतीकारश्छान्दसः। "इयं शुष्मेभिर्बिसखा इवारुजत् (ऋ० सं० ४, ८, ३०, २)"—इति निगमः। अत्र 'विस्यतिर्गतिकर्मसु पठ्यते—इति स्कन्दस्वामी। ऋग्भाष्ये—विस्यति मिस्यति इमौ नैरुक्तधातू ॥

(२४) प्रवते †। (२५) प्लवते। (२६) च्यवते। 'च्युङ् ज्युङ् प्रुङ् प्लुङ् क्लुङ् क्लुङ् गतौ (भू० आ०)'। "अभि प्रवन्त समनेव योषाः (ऋ० सं० ३,८,११,३)"—"तिस्रः पृथिवीरुपरि प्रवा दिवः (ऋ० सं० १, ३, ५, २)"—इति निगमौ ॥

(२७) कवते ‡। 'कुङ् गतिशोषणयोः (भू० आ०)'। "नीचीनवारं वरुणः कवन्धम् (ऋ० सं० ४, ४, ३०, ३)"—इति निगमः। 'कवतेर्गतिकर्मणः कवन्धमुदकम्'—इति स्कन्दस्वामी ॥

(२८) गवते।

(२९) नवते। 'णु स्तुतौ' अदादिः (प०)। 'बहुलं छन्दसि (२, ४, ७३)'—इति शपो लुगभावः, आत्मनेपदन्तु व्यत्ययेन। 'प्र धेनव उदप्रुतो नवन्त (ऋ० सं० ५, ४, ८, १)"—इति निगमः ॥

---

* निरु० २, २४।
† निरु० ७, १०।
‡ निरु० ५, २६।

(३०) चोदति। 'चुदिर् सम्प्रेषणे' रुधादिः, स्वरितेत्। व्यत्ययेन शप्। "चोदन्त आपो' रिणते वनानि (ऋ० सं० ४,१, २३, ६)"—इति निगमः॥

(३१) नचति *। 'नच गतौ (भू० प०)'। "शुक्रच्युतो-रेणुर्नचत द्याम् (ऋ० सं० १, ३, ३, ४)"—इति निगमः॥

(३२) सचति †। 'षच समवाये' स्वरितेत् ( भू० )। 'सिप् बहुलं लेटि ( ३, १, ३४ )', 'लेटोऽडाटौ ( ३, ४, ९४ )'। नैरुक्तधातुर्वा। "सचादिव प्र श्वसुरः (ऋ० सं० १, ३, २४, १)"—इति निगमः। 'सचतेः सचते र्वा गतिकर्मणो रूपम्'—इति स्कन्दस्वामी॥

(३३) म्यचति ‡। म्यचेर्गतिकर्मणो रूपम्'—इति स्कन्दस्वामी॥

(३४) सचति। सच समवाये (भू० उ०)'। "अश्विदेवपत्नाः सचन्ताम् (ऋ० सं० १, २, ६, १)"—"अग्निं विश्वा अभि पृक्षः सचन्ते (ऋ० सं० १,५, १६, २)"—इति निगमौ। सचत्युच्छतीति गतिकर्मसु पाठात्'—इति स्कन्दस्वामी॥

---

* प० १८। निरु० २, २०; १०, २१।

† प० अथैव १४, २, २८। निरु० ३, २१; ४, ८; ७, ११; ८, १८; ९, ११; ११, ४८।

‡ प० ४, २। निरु० ६, ११।

(३५) ऋच्छति। 'ऋ गतिप्रापणयोः (भू० प०)'। 'पाघ्राध्मा (७, ३, ७८)'—इत्यादिसूत्रेण ऋच्छादेशः। वाचा स्तेनं शरव ऋच्छन्तु (ऋ० सं० ८, ४, ७, ५)"—इति निगमः॥

(३६) तुरीयति। नैरुक्तधातुः॥

(३७) चतति *। 'चते याचने' स्वरितेत्। "दूदाद्दूरमचीचतम् ( ? )"—इति निगमः। 'चततिर्गत्यर्थे च'—इति भट्टभास्करमिश्रः॥

(३८) अतति। 'अत सातत्यगमने'। "प्रयन्तु ते समतसि (ऋ० सं० १, २, २८, ४)"—इति निगमः॥

(३९) गाति †। 'गाङ् गतौ (भदा० आ०)'। व्यत्ययेन परस्मैपदी। "निर्यत्—पूतेव स्वधितिः शुचिर्गात् (ऋ० सं० ५, २, ४, ४)"—इति निगमः॥

(४०) इयचति ‡। 'यज पूजायाम्' तुदादिरात्मनेपदी। व्यत्ययेन परस्मैपदम्। 'छन्दस्युभयथा (३, ४, ११७)'—इति द्वि आर्धधातुकत्वात् णि-लोपः। यजेः सनि वा रूपम्, अभ्यासस्य सम्प्रसारणं व्यत्ययेन। "कुविर्मियचसि प्रयज्यो (ऋ० सं० ४, ८, ५, ४)"—इति निगमः। 'गतिकर्मा'—इति हरदत्तः॥

---

* निरु० ६, २०।

† निरु० ९, १८ ६, २२ १०, २६ १०, १७, १६।

‡ निरु० २, १४।

(४१) सचति *। सचतेरेव छान्दसः शमारउपजनः। "असंसन्ती भूरिधारे पयस्वती ( ऋ० सं० ५, १, १४, २ )"—"ऋजीपिण वृषणं सश्चतः श्रिये ( ऋ० सं० १, ५, ८, २ )"—इति निगमौ ॥

(४२) त्सरति †। 'त्सर छद्मगतौ ( भू० प० )'। "अभि त्सरन्ति धेनुभिः (ऋ० सं० ५, ७, १८, १)"—"अव त्सरत्सृगल्य-चिकित्वान् (ऋ० सं० १, ५, १५, ५)"—इति निगमौ ॥

(४३) रंहति ‡। 'रहि गतौ (भू० प०)'। "सहस्रसाः मेधसाता अस्य रंहिः ( ऋ० सं० ८, ८, ३६, ३ )"—"पुरोहरिभ्यां वृषभो रथो हि षः (ऋ० सं० १, ४, १०, ३)"—इति निगमौ। 'रथो रंहतेर्गतिकर्मणः (निरु० ८, ११)'—इति भाष्यम् ॥

(४४) यतते §। 'यती प्रयत्ने' आत्मनेपदम् (भू०)। "हंसा इव श्रेणिशो यतन्ते (ऋ० सं० २, ३, १२, ५)"—"मित्रं न यात-यज्जनम (ऋ० सं० ६, ७, ११, २)"—इति निगमौ ॥

(४५) भ्रमति। 'भ्रमु चलने (भू० प०)'। "भ्रमिरस्यसि-क्रम्य र्यानाम् ( ? )"—इति निगमः ॥

(४६) भ्रजति‖। 'भ्रज भ्रजि गतौ (भू० प०)'। "भ्राजिरेकस्य

* प० ४, २। निरु० ५, २।

† निरु० ५, १। ‡ निरु० ८, ११।

§ प० १८। निरु० १०, २२।

‖ निरु० १२, २०।

ददृशे न रूपम् (ऋ० सं० २, ३, २२, ४)"—"अहिर्धुनिर्वात इव ध्रजीमान् (ऋ० सं० १, ५, २७, १)"—इति निगमौ ॥

(४७) रजति *। (४८) लजति †। (४९) चियति‡ ॥

(५०) धमति §। 'धमिः सौत्रः'—इति स्कन्दस्वामी। यद्वा; 'ध्मा शब्दाग्निसंयोगयोः ( भू० प० )'। पाघ्राध्मास्था ( ७, ३, ७८)'—इत्यादिना धमादेशः। "ग्रावाणो पुरुहूतं धमन्तो ( ऋ० सं० ३, २, २, ५)"—"नि:षीमद्भ्यो धमथो निःषधस्थात् (ऋ० सं० ४, १, ३०, ४)"—इति निगमौ ॥

(५१) मिनाति ‖। 'मीञ् हिंसायाम्'। 'मीनातेर्निगमे (७, ३, ८१)'—इति ह्रस्वः। "मिनोति"—इति पाठान्तरम्। तत्र 'डु मिञ् प्रक्षेपणे' स्वादिः। "समचक्रं रथ मविश्वमिन्वम् (ऋ० सं० २, ८, ६, ३)"इति निगमः। 'मीनातेरेतद्रूपम्, सर्वेणापि लोके नावगन्तुमशक्यम्'—इति हरदत्तः ॥

(५२) ऋण्वति। 'ऋवि रवि गतौ (भू० प०)'। 'इदितो नुम् धातोः (७, १, ५८)', 'रयेर्मतौ बहुलम् (६, १, ३४ वा०)'—'इति बहुलवचनात् सम्प्रसारणम्। "व्यानुषग् वार्या देव ऋण्वति

* प० ३, १४

† निरु० ६, ९।

‡ निरु० २, ६, ५, ३, ९ १०, १०, ११, १०, १४।

§ प० १९, ३, १४। निरु० ६, २।

‖ प० १९। निरु० ७ २९।

(ऋ॰ सं॰ १, ४, २३, ३)"—इति निगमः। 'ऋखतिर्गतिकर्मा, अत्तर्णोतिरर्थः। विविधं गमयति'—इति स्कन्दस्वामि-भाष्यम्॥

(५३) ऋणोति। 'ऋण गतौ' तनादिः स्वरितेत्। "सञ्ज्ञापूर्वको विधिरनित्यः (प॰ शे॰ ८३)"—इति लघूपधगुणाभावः "अभि कृष्णेन रजसा द्यामृणोति (ऋ॰ सं॰ १, ३, ७, ४)"—"ऋणो रपो अनर्वद्यार्णाः (ऋ॰ सं॰ २, ४, १६, २)"—इति निगमौ। उभयोरपि 'ऋणोतिर्गतिकर्मा'—इति स्कन्दस्वामि-भाष्यम्॥

(५४) स्वरति *। 'स्वृ शब्दोपतापयोः'। "हरी इन्द्रप्रतद्वसू अभिस्वर (ऋ॰ सं॰ ६, १, १२, २)"—इति निगमः॥ अत्र 'गतिकर्मा'—इत्युक्तं स्कन्दस्वामी। "अनिमेषं विदथाभि स्वरन्ति (ऋ॰ सं॰ २, ३, १८, १)"—इत्यादौ 'गतिकर्मस्वपठितोऽपि गत्यर्थः'—इत्युक्तम्॥

(५५) सिसर्त्ति †। 'सृ गतौ' जुहोत्यादिः। 'अर्त्तिपिपर्त्त्योश्च (७, ४, ७७)', 'बहुलं छन्दसि (७, ४, ७८)'—इति अभ्यासस्येत्वम्। "प्र बाहवा सिसृतं जीवसे न (ऋ॰ सं॰ ५, ५, ४, ५)"—इति निगमः॥

(५६) विपिष्टि ‡। 'विप्लृ व्याप्तौ' जुहोत्यादिः (उ॰)। लेटि सिब्बहुलं लेटि (३, १, ३४)'। "अग्ने संवेविषोरयिम्

---

* प॰ ३, १७। निरु॰ ३, १२।
† निरु॰ १, १८, १०, २।   ‡ निरु॰ १०, ४६।

(ऋ० सं० ६, ५, २६, १)"—इति निगमः । 'समन्तात् प्रापय'—इति भट्टभास्करमिश्रः ॥

(५७) योयिष्टि । 'युप हिंसायाम् ( भू० प० )' । लेटि सिपि व्यत्ययेन गुणः ॥

(५८) रिणाति * । 'री गतिरेषणयोः' क्र्यादिः स्वादिश्च । "ऋघायमाणो निरिणाति शत्रून् ( ऋ० सं० १, ४, २६, ३ )"—"लोपामुद्रा वृषणं नीरिणाति ( ऋ० सं० २, ४, २२, ४ )"—इति निगमौ ॥

(५९) रीयते । 'रीङ् स्रवणे' दिवादिः । "एदु निम्नं न रीयते (ऋ० सं० १,२,२८,२)"—इति निगमः । 'रीयते रेजतीति गतिकर्मसु पाठात् गत्यर्थः'—इति स्कन्दस्वामि-भाष्यम् ॥

(६०) रेजति † । नैरुक्तधातुः । "हव्यो नय इषवान् मन्म रेजति ( ऋ० सं० २, १, १७, १ )"—'चलति गच्छतीत्यर्थः'—इति स्कन्दस्वामी ॥

(६१) दध्यति ‡ । 'दध पालने' स्वादिः । व्यत्ययेन श्यन् । "पश्वादध्या यो अचरस्य धाता ( ऋ० सं० २, ८, ४, ५ )"—इति च निगमः ॥

(६२) दभ्नोति § । 'दभु दम्भे' स्वादिः ॥

---

* निरु० ३, ५ ।

† निरु० १०, ३२ ।

‡ निरु० १, ७, ९ ।

§ प० १९ । निरु० ५, १९ ।

(६३) युध्यति। 'युध सम्प्रहारे' दिवादिरात्मनेपदी, व्यत्ययेन परस्मैपदी ॥

(६४) धन्वति। 'रिवि रवि धवि गत्यर्थाः (भू० प०)'। "परि सोम प्र धन्वा स्वस्तये ( ऋ० सं० ७, २, ३३, ५ )"—"न यस्य द्यावापृथिवी न धन्व (ऋ० सं० ८,४,१५,१)"—इति च निगमौ ॥

(६५) अरुपति *। नैरुक्तधातुः। "वि धूममग्ने अरुषं मियेध्य (ऋ० सं० १, ३, ८,४)"—"स्वर्णरः श्यावी मरुषोमजुपन् (ऋ० सं० १, ५, १५,१)"—"प्रतीचोरग्नेररुषीरजानन् (ऋ० सं० १, ४, १८, १०)"—इत्यादिषु स्कान्दस्वामिभाष्यम्—'अरुषतिर्गतिकर्मा'—इति दृष्टम्। "युञ्जन्ति ब्रध्नमरुषं चरन्तम् (ऋ० सं० १, १, ११, १)"—इत्यादौ द्वियोः प्रदेशयोः 'अरुष्यतिर्गतिकर्मा'—इत्यपि। उभयथा दृष्टमपि, बहुषु प्रदेशेषु दर्शनात् अरुषतीति पाठोयुक्तः ॥

(६६) आर्यति। "मामार्यन्ति कृतेन कर्वेन च (ऋ० सं० ८, १, ५, ३)"—"तमिद्गीर्भिरार्यन्ति (ऋ० सं० ६, १, २१, ६)"—इति च निगमौ ॥

(६७) सीयते। 'षिञ् बन्धने' स्वादिः क्र्यादिश्च। व्यत्ययेन श्यन्। "डीयते"—इति पाठान्तरम्। तदा 'डीङ् विहायसा गतौ' दिवादिः। निगमदर्शनान्निर्णयः ॥

* प० १, ७। पु० १, ८. निरु० १२. ७।

(६८) तकति। 'तक हसने (भू० प०)'। "यः शूरसाता परितक्म्ये धने' ( ऋ० सं० १, २, ३३, १ )"—"अन्योन्यान्प्रत्यर्ग प्रतकें ( ? )" इति निगमौ॥

(६९) दीयति ('दीङ् क्षये' दिवादिः। व्यत्ययेन परस्मैपदम्। "श्येनो न दीयन्नन्वेति पाथः (ऋ० सं० ५, ५, ५,५)"—इति निगमः॥

(७०) ईंपति *। "ईप गतिहिंसादानेषु' आत्मनेपदी, व्यत्ययेन परस्मैपदम्। "उत्तानौगा ईंपते द्यर्णावत: (ऋ० सं० ४, ४, २७, २)"—इति निगमः। बहुषु 'ईंपतीति गतिकर्मसु पाठात्'—इति स्कन्दस्वामी॥

(७१) फणति †। 'फण गतौ'। "ययामङ्गांस्य न्वापनीफणत् (ऋ० सं० ३, ७, १४, ४)"—इति निगमः॥

(७२) हनति ‡। 'हन हिंसागत्योः' अदादिः। 'बहुलं छन्दसि (२, ४, ७३)'—इति शपोलुग् न भवति। "स यहनन्त मन्युभिर्जनासः (ऋ० सं० ५, ४, २६, २)"—इति निगमः॥

(७३) अर्दति §। 'अर्द गतौ याचने च'॥

(७४) मर्दति ‖। 'मृद मर्दने'। व्यत्ययेन परस्मैपदम्॥

---

* "ईवते" निरु० ४, २, ६, ८, १०, ११।

† निरु० ३, २८।

‡ निरु० ३, १०, ६, २, ७, २३; ८, २०।

§ "अर्दयति" प० १९।

‖ प० १९। "मृदु" निरु० १, २।

(७५) ससृते * । 'ऋ सृ गतौ' जुहोत्यादिः परस्मैपदी। व्यत्ययेनात्मनेपदम्। पृषोदरादित्वात् (६, ३, १०९) अभ्यासस्य रुगागमः। "प्र ससर्ति दीर्घमायुः प्रयक्षे (ऋ० सं० ३, १, १, १)" —"जातेनं जात मति स प्र संसृते (ऋ० सं० २, ७, ४, १)"— इति निगमौ ॥

(७६) नसते †। 'नस कौटिल्ये' आत्मनेपदी। "अश्विभ्यां ते नासिकाभ्याम् (ऋ० सं० ८, ८, २१, १)"—इति निगमः ॥

(७७) ईर्यति ‡। 'ईर्य गतिकान्त्योः' ॥

(७८) इयर्त्ति §। 'ऋ सृ गतौ' जुहोत्यादिः। 'अर्त्ति-पिपर्त्त्योश्च (७, ४, ७७)'। "क्षेष्टीरियर्त्योजसा (ऋ० सं० १, १, १४, ३)"—इति निगमः ॥

(७९) ईर्ते। 'ईर गतौ कम्पने च' अदादिरात्मनेपदी। "मत्सरासः प्रसुपः साकमीरते (ऋ० सं० ७, २, २२, १)"—इति निगमः ॥

(८०) ईङ्खते। 'ईखि गतौ' (भू०) आत्मनेपदी। "य ईङ्खयन्ति पर्वतान् ( ऋ० सं० १, १, ३७, २)"—इति निगमः। अत्र 'ईङ्खतिर्गतिकर्मा'—इति स्कन्दस्वामि-भाष्यम् ॥

* अत्रैव पृ० ५५।

† "नसत" प० ४, १। "नमक:" ७, १७ निरु०।

‡ निरु० ७, २०; ७, १७; ११, १४।

§ निरु० ९, ३।

(८१) चयति । (८२) श्चावति । एतौ नैरुक्तधातू ॥

(८३) गन्ति * । 'गम्लृ गतौ (भ्वा० प०)'। व्यत्ययेन शपोलुक् । "अङ्गिरोभि रागहि यज्ञियेभिः (ऋ० सं० ७,६,१४,५)" —इति निगमः ॥

(८४) आगनीगन्ति† । 'गम्लृ गतौ (भ्वा० प०)' । दाधर्त्ति-दर्धर्त्ति (७, ४, ६५) इत्यादिना आङ्पूर्वस्य गमेर्लटि अभ्यासस्य चुत्वाभावो नीगागमश्च निपात्यते । यङ्लुगन्ताद्वा लटि निपातनाद्रूपसिद्धिः । "वक्ष्यन्ती वेदा गनीगन्ति कर्णम् (ऋ० सं० ५, १, १८, ३)"—इति निगमः ॥

(८५) जङ्गन्ति ‡ । गमेर्यङ्लुकि 'नुगतोऽनुनासिकान्तस्य (७,४,८५)'—इति नुकि च रूपम् । "प्रातर्मक्षू धियावसुर्जगम्यात् (ऋ० सं० १, ४,२४,४)"—इत्यत्र 'जङ्गन्तेर्गतिकर्मण एतद्रूपम्'—इति स्कन्दस्वामि-भाष्यम् ।

(८६) जिन्वन्ति§ । 'इवि जिवि धिवि प्रीणनार्थाः (भ्वा०प०)'॥

---

* "गमध्यै" निरु० २, ०। "अग्मन्" निरु० १२, ४१ ।
"आगच्छान्" निरु० ४, ५० । "आगम्" निरु० ५, २ ।
"आगत" निरु० १२, ४० । "आ गमत" निरु० ११, १५ ।
"आजग्मुः" निरु० १२, ४२ । "आगनीगन्ति" निरु० ८, १८ ।
"समग्मत" निरु० १२, ३४ । "सङ्गमान" निरु० ४, १२ ।

† द्रष्टव्यम् पुरस्तादिहैव (८२) ।

‡ पु० द्रष्टव्यमिहैव (८३) ।

§ प० ४, २ । निरु० ६, २२ । "प्रजिन्वति" निरु० ११, १० ।

(८७) जसति। 'जसु मोचणे' दिवादिः (प०)। व्यत्ययेन शप्॥

(८८) गमति *। 'गमॢ गतौ (भू० प०)'। लेट्। 'लेटोऽडाटौ (३, ४, ६४)'। बाहुलकात् 'सिब्बहुलं लेटि (३,१,३४)'—इति सिप् न भवति। यद्वा; 'सर्वे विधयश्छन्दसि विकल्प्यन्ते'—इति छत्वाभावः। "त आ गमन्तु तइह श्रुवन्तु ( ऋ० सं० ४, ८, ५, १)"—इति निगमः॥

(८९) ध्रति। (९०) भ्राति। (९१) भ्रयति। त्रयोऽपि नैरुक्ताः॥

(९२) वहते†। 'वह प्रापणे' (भू० उ०) स्वरितेत्। "वैश्वानरं मातरिश्वा परावतः ( ऋ० सं० ४, ५, १०, ४ )"—इत्यत्र 'परापूर्वस्य वहतेर्गतिकर्मणः परावच्छब्दः'—इति स्कन्दस्वामी॥

(९३) रथर्यति‡। नैरुक्तधातुः। 'रंहतेर्वा रथो रंहणं गमनम् इच्छतीति क्यचि रथीयतीति प्राप्ते रेफउपजन ईडाभावश्च पृषोदरादित्वात् (६, ३, १०९)'—इति स्कन्दस्वामी। "एष देवो रथर्यति ( ऋ० सं० ६, ७, २०, ५ )"—इति निगमः। माधवभाष्यं द्रष्टव्यम्॥

(९४) जेहते। 'वेहृ जेहृ वाहृ प्रयत्ने' आत्मनेपदी। "ये

---

* पु० द्रष्टव्यमिहैव (८३)।

† "वहि" निरु० ८, १९। "आ वहत्" निरु० ९, ४२; ४२।
"वहतु" निरु० ११, ८; १२। "वह्नि" निरु० १, ७, ६; ८, १।

‡ प० ४, १। निरु० ६, २८।

तोहुपुर्देवता जेहमाना (ऋ० सं० ७,६,१८,४)"—इति निगमः । 'ओ हाङ् गतावित्यस्य रूपम्'—इति स्कन्दस्वामी ॥

(८५) ष्वःकति । (८६) तुम्पति* । (८७) प्साति । (८८) वाति † । (८९) याति ‡ ॥

(१००) इयति § । 'इष गतौ' दिवादिः (प०) । व्यत्ययेन शः । "तवास्मभ्यमिषिर्वः शर्म यंसन् (ऋ० सं० ५, १, २१, १)"–इति निगमः ॥ 'इषुरिषतेर्गतिकर्मणः (९,१८)'—इति निरुक्तम् ॥

(१०१) द्राति ‖ । 'द्रा कुत्सितायां गतौ' अदादिः (प०) । वंसू यवामतयो दस्म दद्रुः ( ऋ० सं० १, ५, ३, १ )"—इति निगमः ॥

(१०२) द्रूळति । नैरुक्तधातुः ॥

(१०३) एजति ¶ । 'एजृ कम्पने (भू० प०)' । "यूयेन्वष्विरेजति (ऋ० सं० १, १, १८, २)"—"यथा समुद्र एजति (ऋ० सं० ४, ४, २०, ३)"—इति निगमौ ॥

(१०४) जमति ** । 'जमु अदने (भू० प०)' । "न जामये

* प० ४, २ । निरु० ५, १६ ।

† निरु० २, २४, २, ५, ११, २२ ।

‡ प० ३, १८ । निरु० २, १, ३, १८ ।

§ निरु० ९, १८, "इषित" ८, ८ ।

‖ निरु० २, २ ।

¶ निरु० ३, १६ ।

** निरु० २ ६ । "जमत्" पु० १, १० ।

ताम्वोरिव्य मरिक् ( ऋ० सं० ३, २, ५, २ )"—इति निगमः। 'जामिर्जमतेर्गतिकर्मण:'—इति स्कन्दस्वामी ॥

(१०५) जवति *। 'जु गतौ'—इति क्षीरस्वामी। "न पातव इन्द्र जुजुर्त्तु नः ( ? )"—"विपाट् शुतुद्री पयसा जवेते (ऋ० सं० ३, २, १२, १)"—इति निगमौ॥

(१०६) वञ्चति। 'वञ्चु गतौ (भू० प०)'। "नमो वञ्चते परिवञ्चते (य० वा० सं० १६, २१)"—इति निगमः॥

(१०७) अनिति †। 'श्वस प्राणने, अन च (अदा० प०)'। "अव मातर्यात्वनिति ( ? )"—इति निगमः। 'अनितिर्गतिकर्मा—इति माधवः॥

(१०८) पवते ‡। 'पूङ् पवने'। "नेन्द्राहृते पवते धाम किञ्चन ( ऋ० सं० ७, २, २२, १ )"—"स्रक्वं संशाय पविमिन्द्र तिग्मम् ( ? )"—इति निगमौ॥

(१०९) हन्ति §। 'हन हिंसागत्योः' अदादिः (प०)। "नि येन मुष्टिहत्यया (ऋ० सं० १, १, १५, २)"—"आस्य वज्र मधिसानौ जघान ( ऋ० स० १, २, ३७, २)"—इति निगमौ॥

---

* "जवेते" निरु० ९, २९।

† निरु० ११, ४७।

‡ "पवस्व" १, २०।

§ "जघन्वम्' निरु० २, १७; ७, २१; "हन्तोः" ६, २; "आजहन्ति", "उपजिघ्नते" ९, २०।

(११०) सेधति । 'षिधु गत्याम् (भू० प०)' । "सेधतं द्वेषो भवतं सचा भुवा (ऋ० सं० १, ३, ५, ५)"—इति निगम ॥

(१११) अगन् *। 'गम्लृ गतौ (भू० प०)' । लुङि तिपि च्लेः 'मन्त्रे घस (२, ४, ८०)'—इति लुकि, 'इतश्च (३ ४,९७)'—'संयोगान्तलोपः (८, २, २३)', 'मोनोधातोः (८, २, ६४)'—इति मकारस्य नकारः । यदामार्गन् प्रथमजा ऋतस्य (ऋ० सं० २,२, २१, २)"—इति निगमः ॥

(११२) अजगन् †। गमेर्लुङि 'बहुलं छन्दसि (२,४ ७०)'—इति शपः श्लु. । पूर्ववन्नत्वम् (८, २, ६४) । "यस्मात्तृरजेगन्नपः (ऋ० सं० ३, १, ५, २)"—इति निगम ॥

(११३) जिगाति ‡। 'गा स्तुतौ (अदा० प० )' । छन्दसि जुहोत्यादिः । 'अर्त्तिपिपर्त्त्योश्च (७, ४, ७७) 'बहुलं छन्दसि (७, ४, ७८)'—इति अभ्यासस्येत्वम् । "धेना जिगाति दाशुषे' (ऋ० सं० १, १, २, ३)"—इति निगमः । 'जगतीति पाठान्तरम्' —इति स्कन्दस्वामिभाष्यम् ॥

(११४) पतति §। 'पतॢ गतौ (भू० प०)' । "गोभिः सर्वदा पतति प्रसूता (ऋ० सं० ५, १, २१, १)"—इति निगमः ॥

(११५) इन्वति ‖। 'इवि गतौ (भू० प०)' । "देवीद्वारो वृहतीर्विश्वमिन्वा (य० वा० स० २८, ३०)"—इति निगमः ॥

---

*, † इहैव पुरस्तात् (८३) ।

‡ इहैव पुरस्तात् (२८) ।

§ "आपसव" निह० ११, १४ ।   ‖ प० १८ ।

